सूत्रकृतांगनी वृत्तिमां शीलाचार्ये केवलिभुक्तिप्रकरणने आधारे ज लगभग केवलिभुक्तिनी चर्चा करेली छे. आज शीलाचार्ये आचारांग सूत्र उपर पण वृत्ति रचेली छे.

विक्रम संवत् १३२७मां ताडपत्र उपर लखाएली खंभातना श्रीशान्तिनाथ जैन ज्ञानभंडारनी (क्रमांक ४) प्रतिमां आचारांग सूत्रना द्वितीय श्रुतस्कन्धनी [1]शीलाचार्यविरचित वृत्तिना अन्तमां नीचे प्रमाणे उल्लेख छे—

"आचारटीकाकरणे यदाप्तं पुण्यं मया मोक्षगमैकहेतुः।
तेनापनीयाशुभराशिमुच्चैराचारमार्गप्रवणोऽस्तु लोकः ।।१।।
शकनृपकालातीतसंवत्सरशतेषु सप्तसु चतुरशीत्यधिकेषु वैशाखपञ्चम्यामाचारटीका दृब्धेति।
शीलाचार्येण कृता गम्भूतायां स्थितेन टीकैषा।
सम्यगुपयुज्य शोध्या मात्सर्यविनाकृतैरार्यैः ।।२।।"

विक्रम संवत् १५६५मां कागळ उपर लखाएली लालभाई दलपतभाई विद्यामन्दिर (अमदावाद)नी (क्रमांक ३६८०) प्रतिमां तथा अन्य पण अनेक प्रतिओमां नीचे प्रमाणे उल्लेख छे—

"आचारटीकाकरणे . . . . . . ।।१।।
शकनृपकालातीतसंवत्सरशतेषु सप्तसु अष्टानवतीत्यधिकेषु वैशाखशुद्धपञ्चम्यामाचारटीका कृतेति।"

आ बंने उल्लेखो जोतां आचारांगसूत्रनी वृत्तिनी रचना शीलाचार्ये शकसंवत् ७८४ (विक्रम सं. ९१९) अथवा प्रत्यन्तर प्रमाणे शकसंवत् ७९८ (विक्रम सं. ९३३)मां पूर्ण करी हती. सूत्रकृतांगनी टीकानी रचना तो त्यार पछी केटलाक वर्षे आवे.

---

१. आ वृत्तिना कर्तानुं प्रसिद्ध नाम शीलांकाचार्य छे, परन्तु ग्रन्थकारे पोतानुं नाम शीलाचार्य जणावेलुं छे तेथी अमे अहीं शीलाचार्य एवो नाम निर्देश कर्यो छे.

आगमोदय समिति प्रकाशित आचारांगवृत्तिमां प्रथम श्रुतस्कन्धनी समाप्तिमां नीचे मुजब रचना समयनो पाठ छपायेलो छे—

"द्वासप्तत्यधिकेषु हि शतेषु सप्तसु गतेषु गुप्तानाम्।
संवत्सरेषु मासि च भाद्रपदे शुक्लपञ्चम्याम् ।।१।।
शीलाचार्येण कृता गम्भूतायां स्थितेन टीकैषा।
सम्यगुपयुज्य शोध्यं मात्सर्यविनाकृतैरार्यैः ।।२।।
कृत्वाऽऽचारस्य मया टीकां यत् किमपि सञ्चितं पुण्यम्।
तेनाऽऽप्नुयाज्जगदिदं निर्वृतिमतुलां सदाचारम् ।।३।।
वर्णः पदमथ वाक्यं पद्यादि च यन्मया परित्यक्तम्।
तच्छोधनीयमत्र च व्यामोहः कस्य नो भवति? ।।४।।
तत्त्वादित्याऽपराभिधानश्रीमच्छीलाचार्यविहिता वृत्तिर्ब्रह्मचर्यश्रुतस्कन्धस्य आचाराङ्गस्य समाप्ता ।।"

आ पाठ प्रमाणे आचारांगना प्रथम श्रुतस्कन्धनी वृत्तिनी रचना शीलाचार्ये गुप्त संवत् ७७२मां पूर्ण करी हती एम फलित थाय छे. आ गुप्त संवतना अर्थ विषे आज सुधी घणी चर्चाओ चाली छे. (जुओ 'इण्डियन एण्टिक्वेरी' इस्वीसन् १८८६ पुस्तक १५ पृ० १८८, जैन साहित्य संशोधक ग्रन्थमालामां प्रकाशित जीतकल्पसूत्रनी प्रस्तावना तथा चउप्पन्न-महापुरुसचरियंनी प्रस्तावना वगेरे. डो. फ्लीट इण्डियन एण्टिक्वेरीमां जणावे छे के 'शीलाचार्ये गुप्त संवत् अने शकसंवत् एक समजीने शकसंवत् अर्थमां गुप्त संवत्नो निर्देश कर्यो छे' वगेरे)

परन्तु विशेष तपास करतां, सौथी प्राचीन गणी शकाय एवी खंभातनी बे ताडपत्रीय प्रतिओमां तथा ला. द. विद्यामन्दिर (अमदावाद)नी विक्रम सं. १५६५ तथा १६६८मां लखाएली अमे जोएली प्रतिओमां प्रथम श्रुतस्कन्धनी वृत्तिने अन्ते आवो ऊपर जणावेलो कोई ज पाठ जोवामां आवतो नथी. मात्र बीजा श्रुतस्कन्धनी वृत्तिने अंते समग्र ग्रन्थ समाप्त थाय छे ते प्रसंगे ज रचना समय आपेलो छे जे अमे अहीं दर्शाव्यो छे.

शाकटायनव्याकरण उपर अमोघा वृत्तिनी रचना विक्रमसंवत ८७१ थी ९२४ वच्चे कोईक समये थयेली छे एवो विद्वानोनो निश्चित मत अमे पूर्वे जणावी गया छीए. स्त्रीनिर्वाण-केवलिभुक्तिप्रकरणना कर्ता अने व्याकरणकार शाकटायन जो एक ज छे तो व्याकरणकार शाकटायननो समय ज स्त्रीनिर्वाण-केवलिभुक्तिप्रकरणकार शाकटायननो समय समजवो जोईए. आचारांग तथा सूत्रकृतांगना टीकाकार शीलाचार्यनो समय नक्की करती वखते शाकटायनना समयने पण लक्षमां लेवो जोईए.

स्त्रीनिर्वाण-केवलिभुक्तिप्रकरणनी टीकामां अनेक स्थले बौद्धाचार्य धर्मकीर्तिना न्यायबिन्दु आदि ग्रंथोनी छाया छे. धर्मकीर्तिना प्रमाणवार्तिकमांथी एक कारिका पण उद्धृत करेली छे. एटले आ ग्रंथनी रचना धर्मकीर्तिना ग्रंथो पछी छे तेमज सूत्रकृतांगनी शीलाचार्यकृत टीकानी पूर्वे थयेली ज छे ए वात बीलकुल स्पष्ट छे. धर्मकीर्तिनो समय विद्वानो सातमी शताब्दी आसपास गणे छे.

ग्रंथकार—शाकटायन महावैयाकरण तरीके प्रसिद्ध छे ज. तेमना व्याकरणनी अद्‌भुत छाया हेमचन्द्राचार्ये रचेला सिद्ध-हेम शब्दानुशासन उपर पडेली छे, ए विषे तुलनात्मक रीते घणुं लखायेलुं छे. ए उपरांत शाकटायन दर्शनशास्त्रोना पण महाविद्वान छे ए वात आ ग्रंथ वांचतां स्पष्ट जणाई आवे छे. संभव छे के स्त्रीनिर्वाण-केवलिभुक्तिनी चर्चानी आवी दार्शनिक शैलीथी रजुआत तेमणे प्रारंभी होय के जेने पाछळना श्वेतांबर आचार्यो अनुसर्या होय. आ ग्रंथमां आवतां अनेकानेक आगमादि शास्त्रोना उद्धरणो जोतां शाकटायननुं आगमादि धर्मशास्त्रोनुं ज्ञान पण विशाळ अने अगाध हतुं ए स्पष्ट जणाई आवे छे.

"शब्दानुशासनं शास्त्रमिदं महाश्रमणसंघाधिपतिर्भगवानाचार्यः शाकटायनः प्रारभते।" अमोघावृत्तिना प्रारंभमां आवता आवा निर्देशथी सिद्ध थाय छे के शाकटायन विशाळ श्रमणसंघना नायक पण हता. आथी ज मलयगिरिआचार्ये शाकटायन माटे यापनीययतिग्रामाग्रणी तरीके करेलो उल्लेख तथा श्रुतकेवलिदेशीय तरीकेनो शाकटायनव्याकरणना पादोनी समाप्ति आदिमां मळतो निर्देश पण यथार्थ छे. शाकटायनव्याकरणनी चिन्तामणि टीकाना रचयिता यक्षवर्मा टीकाना प्रारंभमां

स्वस्ति श्रीसकलज्ञानसाम्राज्यपदमाप्तवान्।
महाश्रमणसंघाधिपतिर्यः शाकटायनः॥ ३॥

ए रीते शाकटायनने वर्णवे छे. शाकटायननुं विविध विषयोनुं अगाध ज्ञान जोतां आवुं वर्णन जोवा मळे ए स्वाभाविक छे.

पद्धति—ग्रंथकारे मिश्र पद्धतिथी आ ग्रंथ रचेलो छे जेमां मूळ अने टीकानुं मिश्रण होय छे—मिश्रण करवामां आवे तो ज जेमां घणीवार अर्थ पण समजाय छे. एक ज ग्रंथमां केटलोक भाग मूळ कारिका रूपे छे अने केटलोक भाग टीका रूपे छे. ए युगमां आ पद्धति प्रचलित हती. जुओ दिङ्नागनो प्रमाणसमुच्चय तथा धर्मकीर्तिना प्रमाणवार्तिकनो स्वार्थानुमानपरिच्छेद वगेरे. मिश्रक टीकानी पद्धतिथी रचायेला ग्रंथोमां मूळ अने टीका मळीने ग्रंथ बने छे.

विशिष्टता—आ ग्रंथमां घणी घणी विशिष्ट वातो जोवा मळे छे. पृ० १९ पं. २२-२३मां ओघ, अणु अने औपग्रहिक एम त्रण प्रकारनी उपधिनो उल्लेख छे. औघिक अने औपग्रहिक बे प्रकारनी उपधिनो उल्लेख श्वेतांबर ग्रंथोमां घणे स्थले आवे छे. 'अणु' प्रकारनी उपधि ए यापनीय संघनी विशिष्टता लागे छे.

आमां जे आगमपाठो उद्धृत करवामां आवेला छे तेमां पण विशिष्टता देखाई आवे छे. श्वेतांबर परंपरामां जे आगमोनी पाठ परंपरा प्रचलित छे तेनाथी थोडो पाठभेद केटले य स्थळे छे अने तेनो अमे ग्रंथना टिप्पणमां (जुओ पृ० १९ टि० वगेरे) अथवा परिशिष्टोने अंते अवतरणोनी अकारादिक्रमथी ज्यां सूची आपेली छे त्यां यथासंभव निर्देश करेलो छे. श्वेतांबरोनी जेम यापनीयो आगमादिने जरूर मान्य राखता हता, छतां तेमना पासे आगमादिनी केटलीक विशिष्ट पाठपरंपरा हती ए वात जरूर जणाय छे.

आ बंने प्रकरणोनुं अवगाहन करतां आवी अनेक विशिष्टताओ जोवा मळशे.

महत्ता—आ ग्रंथनो केटलो बधो प्रचार हशे ए वात एटला उपरथी पण समजी शकाय तेम छे के ग्रंथकार यापनीय होवा छतां ते पछीना अनेक महान् श्वेतांबर ग्रंथकारोए स्त्रीनिर्वाणप्रकरण तथा केवलिभुक्तिप्रकरणनो छूटथी उपयोग पोताना

ग्रंथोमां कर्यो छे. प्रमेयकमलमार्तण्ड तथा न्यायकुमुदचन्द्र आदि ग्रंथोना कर्ता प्रसिद्ध दिगंबराचार्य प्रभाचन्द्रे पण आ प्रकरणोने मुख्यतया सामे राखीने स्त्रीनिर्वाण तथा केवलिभुक्तिनो पूर्वपक्ष रच्यो छे.[१] केटलीये शताब्दीओ सुधी आ ग्रंथनुं खूब महत्व अने प्रचार हशे ए आ उपरथी समजी शकाय छे. वादिवेताल शांतिसूरिए रचेली उत्तराध्ययनसूत्रनी पाइय टीकामां आवती युक्तिओने आधारे मुनिचन्द्रसूरिना शिष्य वादी देवसूरिए दिगंबराचार्य कुमुदचन्द्रनो पाटणमां पराजय कर्यो हतो आ प्रसिद्ध वात छे.[२] वादिवेताल शांतिसूरिए उत्तराध्ययन सूत्रनी पाइय टीकामां शाकटायनविरचित स्त्रीनिर्वाणप्रकरणने सामे राखीने ते आधारे लगभग बधुं लख्युं छे ए वात आ ग्रंथनुं द्वितीय परिशिष्ट जोवाथी समजाशे.

आ संबंधमां पं. दलसुखभाई मालवणियाए न्यायावतारवार्तिकवृत्तिना टिप्पणमां (पृ० २८५) जे लख्युं छे ते पण जाणवा योग्य होवाथी नीचे उद्धृत करवामां आवे छे——

"स्त्री मोक्षकी दार्शनिक चर्चा संस्कृतमें शाकटायनने सर्वप्रथम की हो ऐसा जान पड़ता हैं। उनके पहले चर्चा चल पड़ी थी[३] इसमें तो संदेह नहीं किन्तु उस चर्चाको व्यवस्थित रूप सर्व प्रथम उन्हीने दिया है यह इसलिए संभव जान पड़ता है कि स्त्रीमोक्षका समर्थन करनेवाले श्वेताम्बर दार्शनिक ग्रंथ और स्त्रीमोक्षका निराकरण करनेवाले समस्त दिगम्बर दार्शनिक ग्रन्थ शाकटायनके स्त्रीमुक्ति प्रकरणको ही आधारभूत मान करके चलते है। श्वेताम्बर अपने पक्षके समर्थनमें उक्त प्रकरणका उपयोग करते है और दिगम्बर उक्त प्रकरणकी प्रत्येक युक्तिको पूर्वपक्षमें रखकर उसका खण्डन करते है।

आचार्य जिनभद्रने[४] युक्तिपुरःसर वस्त्रका समर्थन करनेका प्रयत्न किया है किन्तु स्त्रीमुक्तिकी चर्चा उन्होंने नहीं की। आचार्य कुन्दकुन्दने इस प्रश्नको उठाया है किन्तु वह दार्शनिक ढंगकी चर्चा न होकर आगमिक मालूम होती है।[५] उनके वाद ही इस चर्चाने गंभीर रूप पकड़ा है इसमें तो संदेह है ही नहीं। पूज्यपाद जैसे आचार्य मात्र निषेध करके ही चुप रह जाते हैं, विशेष युक्ति नहीं देते। अकलंकने भी विशेष चर्चा नहीं की।[६]

प्रतीत होता है कि स्त्रीमुक्तिकी चर्चा प्रथम यापनीय और दिगम्बरोंके बीच शुरू हुई। यापनीयोंने स्त्रीमोक्षका समर्थन किया। उन्हींकी युक्तिओंको श्वेताम्बरोंने अपनाया। आचार्य हरिभद्रने इस चर्चाको श्वेताम्बरीय ग्रन्थोंमें प्रविष्ट की हो ऐसा जान पड़ता है। आचार्य हरिभद्रने इस चर्चाको यापनीयोंसे लिया है इस विषयमें सन्देह नहीं। क्यों कि उन्होने ललितविस्तरामें इस विषयमें प्रमाणभूत यापनीय तन्त्रको साक्षी रूपसे उद्धृत किया है। ललितविस्तरा पृ. ५७।

इसके वाद तो यह चर्चा मुख्य रूपसे श्वेताम्बर और दिगम्बरोंके बीच हुई है। किन्तु दोनोंकी चर्चाकी मूल भित्ति शाकटायनका स्त्रीमुक्तिप्रकरण ही रहा हे। उसीके आधार पर अभयदेव, प्रभाचन्द्र, वादीदेवसूरि और यशोविजयजीने इस चर्चाको उत्तरोत्तर पल्लवित की है[७]।

---

१. जुओ द्वितीय तथा तृतीय परिशिष्ट।।

२. उत्तराध्ययनग्रन्थटीका श्रीशान्तिसूरिभिः।
विदधे वादिनागेन्द्रसन्नागदमनी हि सा।। ८९ ।।
शिष्येण मुनिचन्द्रस्य सूरेः श्रीदेवसूरिणा।
तन्मव्यत उपन्यस्तस्त्रीनिर्वाणवलादिह।। ९० ।।
गुरुः श्री सिद्धराजस्य जितो वादे दिगम्बरः।।
तदीयवचसां मिश्रा विद्वद्दुःसाधसाधिका।। ९१ ।।
——प्रभावकचरितमां शान्तिसूरिप्रबन्ध

३. देखो स्त्रीमुक्तिप्रकरणमें पूर्वपक्ष।

४. विशेषा. गा. २५५८से।

५. सूत्रप्राभृत (षट्प्राभृतान्तर्गत) गा० २३-२६।

६. सर्वार्थ. १०.९.। राजवा० पृ० ३६६।

७. सन्मति. टी० पृ० ७५१। न्यायकु. पृ० ८६५। प्रमेयक० पृ० ३२८। शास्त्रवा० यशो० पृ० ४२४-४३०। स्याद्वादर० (त्रुटित) पृ० ११२२।

प्रस्तुतमें शान्त्याचार्यने भी मुख्यरूपसे शाकटायनके प्रकरणको ही पूर्वोत्तरपक्षकी चर्चाका आधार बनाया है जो तुलनासे स्पष्ट होगा।"

न्यायकुमुदचन्द्र द्वितीयभागनी प्रस्तावनामां पं० महेन्द्रकुमारजीए जे लख्युं छे ते पण जाणवा योग्य होवाथी अहीं नीचे उद्धृत करवामां आवे छे—

"राष्ट्रकूटवंशी राजा अमोघवर्षके राज्यकाल (ईस्वी. ८१४-८७७) मे शाकटायन नामके प्रसिद्ध वैयाकरण हो गए है। ये यापनीय संघके आचार्य थे।[1] यापनीयसंघका बाह्य आचार बहुत कुच्छ दिगम्बरोंसे मिलता जुलता था। ये नग्न रहते थे। श्वेताम्बर आगमोंको आदरकी दृष्टिसे देखते थे। आ. शाकटायनने अमोघवर्षके नामसे अपने शाकटायनव्याकरण पर 'अमोघ-वृत्ति' नामकी टीका बनाई थी। अतः इनका समय भी लगभग ई. ८०० से ८७५ तक समजना चाहिये। यापनीयसंघके अनुयायी दिगम्बर और श्वेताम्बर दोनों सम्प्रदायोंकी कुछ कुछ बातोंको स्वीकार करते थे। एक तरहसे यह संघ दोनों सम्प्र-दायोंको जोड़नेके लिए शृंखलाका कार्य करता था। आचार्य मलयगिरिने अपनी नन्दीसूत्रकी टीका (पृ० १५)में शाकटायनको 'यापनीययतिग्रामाग्रणी' लिखा है—"शाकटायनोऽपि यापनीययतिग्रामाग्रणीः स्वोपज्ञशब्दानुशासनवृत्तौ।" शाकटायन आचार्यने अपनी अमोघवृत्तिमें छेदसूत्र निर्युक्ति कालिकसूत्र आदि श्वे० ग्रन्थोंका बड़े आदरसे उल्लेख किया है। आचार्य शाकटायनने केवलि-कवलाहार तथा स्त्रीमुक्तिके समर्थनके लिए स्त्रीमुक्ति और केवलिभुक्ति नामके दो प्रकरण बनाए हैं।[2] दिगम्बर और श्वेताम्बरोंके परस्पर बिलगावमें ये दोनों सिद्धान्त ही मुख्य माने जाते हैं। यों तो दिगम्बर ग्रन्थोंमें कुन्दकुन्दाचार्य पूज्यपाद आदिके ग्रन्थोंमें स्त्रीमुक्ति और केवलिभुक्तिका सूत्ररूपसे निरसन किया गया है, परन्तु इन्हीं विषयोंके पूर्वोत्तरपक्ष स्थापित करके शास्त्रार्थका रूप आ. प्रभाचन्द्रने ही अपने प्रमेयकमलमार्त्तण्ड तथा न्यायकुमुदचन्द्रमें दिया है। श्वेताम्बरोंके तर्कसाहित्यमें हम सर्वप्रथम हरि-भद्रसूरिकी ललितविस्तरामें स्त्रीमुक्तिका संक्षिप्त समर्थन देखते हैं, परन्तु इन विषयोंको शास्त्रार्थका रूप सन्मतिटीकाकार अभय-देव, उत्तराध्ययन पाइयटीकाके रचयिता शान्तिसूरि, तथा स्याद्वादरत्नाकरकार वादि देवसूरिने ही दिया है। पीछे तो यशो-विजय उपाध्याय, तथा मेघविजयगणि आदिने पर्याप्त साम्प्रदायिक रूपसे इनका विस्तार किया है। इन विवादग्रस्त विषयों पर लिखे गए उभयपक्षीय साहित्यका ऐतिहासिक तथा तात्त्विकदृष्टिसे सूक्ष्म अध्ययन करने पर यह स्पष्ट ज्ञात हो जाता है कि स्त्रीमुक्ति और केवलिभुक्ति विषयोंके समर्थनका प्रारम्भ श्वेताम्बर आचार्योंकी अपेक्षा यापनीयसंघ वालोंने ही पहिले तथा दिलचस्पीके साथ किया है। इन विषयोंको शास्त्रार्थका रूप देनेवाले प्रभाचन्द्र, अभयदेव, तथा शान्तिसूरि करीब करीब समकालीन तथा समदेशीय थे। परन्तु इन आचार्योंने अपने पक्षके समर्थनमें एक दूसरेका उल्लेख या एक दूसरेकी दलीलोंका साक्षात् खंडन नहीं किया। प्रमेयकमलमार्त्तण्ड और न्यायकुमुदचन्द्रमें स्त्रीमुक्ति और केवलिभुक्तिका जो विस्तृत पूर्वपक्ष लिखा गया है वह किसी श्वेतांम्बर आचार्यके ग्रन्थका न होकर यापनीयाग्रणी शाकटायनके केवलिभुक्ति और स्त्रीमुक्ति प्रकरणोंसे ही लिया गया है।

इन ग्रन्थोंके उत्तरपक्षमें शाकटायनके उक्त दोनों प्रकरणोंकी एक एक दलीलका शब्दशः पूर्वपक्ष करके सयुक्तिक निरास किया गया है। इसी तरह अभयदेवकी सन्मतितर्कटीका, और शान्तिसूरिकी उत्तराध्ययन पाइयटीका और जैनतर्कवार्तिकमें शाक-टायनके इन्हीं प्रकरणोंके आधारसे ही उक्त बातोंका समर्थन किया गया है। हाँ, वादिदेवसूरिके रत्नाकरमें इन मतभेदोंमें दिगम्बर और श्वेताम्बर दोनों सामने सामने आते हैं। रत्नाकरमें प्रभाचन्द्रकी दलीलें पूर्वपक्ष रूपमें पाई जाती हैं। तात्पर्य यह कि प्रभाचन्द्रने स्त्रीमुक्तिवाद तथा केवलिकवलाहारवादमें श्वेताम्बर आचार्योंकी बजाय शाकटायनके केवलिभुक्ति और स्त्रीमुक्ति प्रकरणोंको ही अपने खंडनका प्रधान लक्ष्य बनाया है। न्यायकुमुदचन्द्र (पृ० ८६९)के पूर्वपक्षमें शाकटायनके स्त्री-मुक्ति प्रकरणकी यह कारिका भी प्रमाण रूपसे उद्धृत की गई है।

"गार्हस्थ्येऽपि सुसत्त्वा विख्याताः शीलवत्तया जगति।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च॥" (स्त्रीनिर्वाण० ३७)

---

१. देखो—पं. नाथूरामप्रेमीका 'यापनीय साहित्यकी खोज' (अनेकांत वर्ष ३ किरण—१) तथा प्रो. ए. उपाध्येका 'यापनीय संघ' (जैनदर्शन वर्ष अंक ७) लेख।

२. ये प्रकरण जैनसाहित्यसंशोधक खंड २ अंक ३–४ में मुद्रित हुए हैं।

**संपादन**—ईस्वीरान १९२४मां पुनाथी प्रकाशित थयेला 'जैन साहित्य-संशोधक' (खंड २, अंक ४, परिशिष्ट) मां 'स्त्रीमुक्ति-केवलिभुक्ति-प्रकरणयुग्मम्' ए नामे आ बे प्रकरणोनी मूळ मात्र कारिकाओ छपाई हती. मूळ हस्तलिखित प्रतिमां अनेक अशुद्धिओ होवा छतां, विद्वानोने आ कारिकाओ घणी उपयोगी थई छे. स्व० आगमप्रभाकर मुनिराज श्री पुण्यविजयजी महाराजे लगभग आठ-दश वर्ष पूर्वे स्वोपज्ञवृत्तिसहित आनुं संपादन कार्य मने सोंप्युं हतुं. आनी प्रतिओ संबंधमां सं० २०२३मां श्रावण-सुदि सातमे अमदावादथी लखेला पत्रमां तेओश्रीए नीचे मुजब जणाव्युं हतुं—

"स्त्रीमुक्ति-केवलिभुक्तिनी एक नकल पाटणमां मूळ मात्रनी छे. बीजी एक नकल अतिजीर्ण हालतमां नाहटाजी पासे छे. आ बन्नेय नकलोने में बहु ज चोक्कसाईथी मेळवी छे. टीकानी नकल खंडित जे आपने मोकली छे ते खंभात शान्तिनाथ ज्ञानभंडारनी छे ते अनुमान चौदमा सैकाना पूर्वार्धमां लखेली छे. ते सिवाय बीजी एक ताडपत्रीय प्रतिनां त्रण-चार पानां नाहटाना संग्रहमांथी मळ्या हता. तेनी नकल आपणे करावी लीधी हती. जे आपणा पासे छे पण ते घणी अशुद्ध छे. आ पानां जोतां ज ख्याल आव्यो हतो के आ बे प्रकरणो उपर टीका पण रचाई छे. ज्यारे खंभात गयो त्यारे आपने जे प्रति मोकली छे ते जोतां आनंद थयो. खंडित होवा छतां घणो भाग होवाथी आनंद मान्यो."

आ० प्र० मुनिराजश्री पुण्यविजयजी महाराजे अनेक स्थळोना महत्त्वना प्राचीन ज्ञानभंडारोनो उद्धार करेलो होवाथी क्यां कई महत्त्वनी प्रति छे एनो एमने ज सविशेष ख्याल होवाथी में एमणे मोकलेली सामग्रीने आधारे आ ग्रंथनुं संपादन करेलुं छे. एकंदरे नीचे मुजब चार प्रतिओनो आधार आमां लेवायो छे. तेनो परिचय आ प्रमाणे छे—

P मुनिराजश्री पुण्यविजयजी महाराजे पाटणनी मूळमात्रनी जे प्रतिनो उल्लेख उपरना पत्रमां कर्यो छे अने जेनी साथे मेळवीने-सुधारीने जैनसाहित्यसंशोधकनी मुद्रित कारिकाओ तेओश्रीए मारा उपर मोकली हती तेने आधारे घणां वर्षो पूर्वे 'जैन साहित्यसंशोधक'मां मूळ कारिकाओ छपायेली हतो एवी मारी संभावना छे. आ पाटणनी प्रतिनी अमे P संज्ञा राखी छे.

N श्रीअगरचंदजी नाहटानी जे मूळ मात्रनी प्रतिने आधारे मुनिराज श्रीपुण्यविजयजी महाराजे जैन साहित्यसंशोधकमां मुद्रित पुस्तकमां पाठांतरो नोंधीने मारा उपर मोकलेलां छे तेनी अमे N संज्ञा राखी छे.

S खंभातना श्री शान्तिनाथ जैनज्ञानभंडारनी ताडपत्रीय प्रति (नं. २७३) नी अमे S संज्ञा राखी छे. आमां प्रथम पत्र, १८, ३४, ४१, ४७, ४८, ४९, ५० आटलां पत्रो नथी. तथा ६१ पछीनां ग्रंथ समाप्ति सुधीनां छेल्लां जेटलां पत्रो होय ते बधां ज पत्रो नथी. उपरांत, ४०मुं पत्र अधुं खंडित छे.

A अगरचंदजी नाहटाना ताडपत्रीय संग्रहमांथी मळेलां मात्र त्रण पत्रो के जेमां सटीक स्त्रीनिर्वाण प्रकरणनो थोडो अंत भाग तथा सटीक केवलिभुक्तिप्रकरणनो प्रारंभनो अल्प भाग मळे छे. आ ३ पत्रनी अमे A संज्ञा राखी छे.

आ ग्रंथमां जे पाठ अमे कल्पनाथी सुधारेलो छे ते ( ) आवा कौंसमां मूकेलो छे, पण जे अमे उमेरेलो छे ते [ ] आवा ब्रेकेटमां मूकेलो छे.

**कारिका**—जैन साहित्य संशोधकमां स्त्रीनिर्वाणप्रकरणनी ४७ कारिकाओ तथा केवलिभुक्तिप्रकरणनी ३७ कारिकाओ छपायेली छे. स्व. मुनिराजश्री पुण्यविजयजी महाराजे N, P साथे मेळवीने स्त्रीनिर्वाणप्रकरणनी कारिका ४९ नोंधी छे. हकीकतमां टीका साथे मेळवतां केटलीक कारिकाओ स्पष्ट रीते आमां छूटी जाय छे. S प्रतिमां कारिकाओना भागो टीका साथे मिश्रित छे अने कारिका साथे संख्यांकनिर्देश कोई पण स्थळे करेलो नथी. एटले मूळ कारिकाओ कई कई अने केटली? ते नक्की करवानुं अमने घणुं दुष्कर लाग्युं. छतां A प्रतिमां स्त्रीनिर्वाणनी छेल्ली त्रण कारिकाओ पासे ५२, ५३, ५४ एम अंक-निर्देश करेलो होवाथी ते पूर्वेनी कारिकाओनो संख्यांक अमारी कल्पनाथी गोठवीने स्त्रीनिर्णाणप्रकरणनी मूळ कारिकाओ प्रारंभनां ७ पृष्ठमां तथा १३ थी ३८ पृष्ठमां छापवामां आवी छे. जुओ पृ. १ टि. २, पृ० ३७ टि० ४. आ छपाया पछी बृहट्टिप्पणिकानो उल्लेख अमारा जोवामां आव्यो. जेना आधारे स्त्रीनिर्वाण-केवलिभुक्तिनी बधी मळी ९४ कारिकाओ थवी जोईए. अने सटीक ग्रंथ जोतां ९४नी संख्या बराबर मळी पण रहे छे. एटले अमे प्रथम परिशिष्टमां ए रीते अंक गोठवीने मूळ स्त्रीनिर्वाण प्रकरणनी ५७ कारिकाओ छापी छे. ते पछी परिशिष्टादिमां अमे ए ज अंकोने अनुसर्या छीए. N तथा P प्रतिमां केटलीक कारिकाओ ज नथी तेम ज कोईक कोईक स्थळे कारिकाक्रममां विपर्यास पण छे. (जुओ पृ० ६ टि० ३. पृ० ११ टि० १) एटले आ ग्रंथना संपादनमां अमे S ने ज मुख्यतया अनुसर्या छीए. S प्रतिमां अनेक स्थळे पाठो अमने अशुद्ध

जणाया छे. छतां ज्यां S प्रतिमां पत्रो ज मळतां नथी त्यां कारिकाओने पूर्ण करवामां N तथा P प्रतिए अमने घणी ज सहाय करी छे. (जुओ पृ. १३ टि. २ वगेरे).

**परिशिष्ट**—द्वितीय तथा तृतीय परिशिष्टो जोवाथी पूर्वाचार्योए आ ग्रंथने केवो आधारभूत बनाव्यो हतो ते समजाशे. तेमज पूर्वना ग्रंथकारोए एक ज विषय उपर केवी विविध रीते चर्चा-विचारणा करी छे तथा एक बीजा उपर केवी केवी रीते छाया पडी छे ते पण जोवा मळशे. ते ते चर्चा स्त्रीनिर्वाण तथा केवलिभुक्तिना कया कया अंशने मळती आवे छे ए तुलना अमे द्वितीय-तृतीय परिशिष्टना टिप्पणीमां करेली छे. वळी सटीक प्रतिमां केटलांक पत्रो ज नथी तेमां शी वात हशे तेनी पण कल्पना परिशिष्टना केटलाक भाग उपरथी थई शकशे.

**उपसंहार**—आ ग्रंथने बने तेटला श्रमथी शुद्ध करवानो तथा पाठान्तर टिप्पण आदि संस्कारो करवानो प्रयत्न करवामां आव्यो छे. छतां एक मात्र, कंईक अशुद्ध अने खंडित S प्रतिने आधारे मुख्यतया आनुं संपादन थयुं छे, यापनीय संघनी केटलीये विशिष्ट वातो अज्ञात छे इत्यादि कारणे तथा मतिमान्द्यथी आनुं संपादन करवामां जे कोई दोष रही गयो होय के थई गयो होय ते माटे—मिथ्या मे दुष्कृतम्।

**बहुमान**—आगमप्रभाकर मुनिराजश्री पुण्यविजयजी महाराजनी प्रेरणाथी आ ग्रंथनुं संपादन में स्वीकार्युं हतुं. पोताना अमूल्य समयनो भोग आपीने घणा परिश्रमपूर्वक अतिदुर्लभ विविध सामग्रीनो संचय करी मारा उपर मोकलीने मारी ग्रंथसंशोधनादि विविध प्रवृत्तिओमां तेओश्री मने घणी ज सहाय अने उपबृंहणा सतत करता हता. आ ग्रंथना संपादनमां पण ए रीते ज विविध सहाय अने उपबृंहणा तेमना तरफथी मने मळी छे. तेओश्री प्रति मारो कृतज्ञता अने बहुमाननो उत्कट भाव कया शब्दोथी व्यक्त करुं?

आ ग्रंथ शीघ्र मुद्रित थाय ए माटे तेओश्रीनी तीव्र इच्छा होवा छतां आ ग्रंथ मुद्रित थाय ते पूर्वे ज तेओश्रीनो स्वर्गवास थई गयो. प्रेसोनी मुश्केली अने अमारुं ग्रामानुग्राम विहरण आ बंने कारणे आ ग्रंथनुं मुद्रण घणुं मुश्केल बनी गयुं हतुं. 'जैन आत्मानंद सभा—भावनगर'ना प्रमुख प्रो. खीमचंदभाई चांपशी शाहे आमां घणो रस लई अमदावाद नवजीवन प्रेसमां छापवानी व्यवस्था करी आपी. श्री रतिलाल दीपचंदभाई देसाई पण आमां सहायक थया. लालभाई दलपतभाई भारतीय संस्कृति विद्यामंदिर अमदावादना अध्यक्ष पं. दलसुखभाई मालवणियाए आना प्रुफरीडींग आदिनी व्यवस्था तेमनी देखरेख नीचे गोठवी आपी ते उपरांत प्रस्तावना माटे उपयोगी ऐतिहासिक आदि सामग्री पूरी पाडवामां पण तेमणे घणी सहाय करी छे. तथा तेमना चिरंजीव रमेशभाई मालवणियाए घणा श्रमपूर्वक आ ग्रंथना प्रुफरीडींग आदिनी जवाबदारी संभाळी छे. आ बधानी सहायथी आ ग्रंथनुं मुद्रण-प्रकाशन सरळ थई शक्युं छे.

आ सर्वे महानुभावो प्रति अंतःकरणपूर्वक कृतज्ञताथी मारा धन्यवाद छे.

अंतमां, परमकृपाळु परमात्मा श्री शंखेश्वर पार्श्वनाथ भगवान तथा मारा अनंत उपकारी पूज्यपाद पिताश्री गुरुदेव मुनिराजश्री १००८ भुवनविजयजी महाराजनी असीम कृपाथी ज आ ग्रंथनुं संपादन माराथी थई शक्युं छे तेथी तेमना परम पवित्र चरणोमां अनंतशः वंदना पूर्वक आजे परमपूज्य गुरुदेवनी १५मी पुण्यतिथिए आ प्रस्तावना राणकपुरजी तीर्थमां मूलनायक परमकृपाळु परमात्मा श्री ऋषभदेव भगवाननी पवित्र छायामां पूर्ण करवामां आवे छे.

निवेदक—

पूज्यपादाचार्यदेवश्रीमद्विजयसिद्धिसूरीश्वरपट्टालंकार—
पूज्यपादाचार्यमहाराजश्रीमद्विजयमेघसूरीश्वरशिष्य—
पूज्यपादगुरुदेवमुनिराजश्रीभुवनविजयान्तेवासी
मुनि जम्बूविजय

राणकपुरतीर्थ
सं. २०२९, महासुदि ८

॥ श्रीशंखेश्वरपार्श्वनाथाय नमः ॥

॥ श्रीसद्गुरुदेवेभ्यो नमः ॥

यापनीययतिसङ्घाग्रणीभदन्तशाकटायनाचार्यविरचिते

# ॥ स्त्रीनिर्वाण-केवलिभुक्तिप्रकरणे ॥

## तत्राद्यं

## ॥ स्त्रीनिर्वाणप्रकरणम्[1] ॥

प्रणिपत्य भुक्ति-मुक्तिप्रदममलं धर्ममर्हतो दिशतः ।
वक्ष्ये स्त्रीनिर्वाणं केवलिभुक्तिं च सङ्क्षेपात् ॥ १ ॥[2]

अस्ति स्त्रीनिर्वाणं पुंवद् यदविकलहेतुकं, स्त्रीषु ।
न विरुध्यते हि रत्नत्रयसम्पद् निर्वृतेर्हेतुः ॥ २ ॥

---

१. अत्रेदमवधेयम् – N. प्रतौ P. प्रतौ च केवला मूलकारिका एव सन्ति । A. प्रतौ S. प्रतौ च टीकाप्यस्ति । तत्र सटीकायाम् A. प्रतौ S. प्रतौ च स्त्रीनिर्वाणप्रकरणस्यान्ते "इति स्त्रीनिर्वाणपरिच्छेदः समाप्तः" इत्युल्लेखो दृश्यते । केवलिभुक्तिप्रकरणस्यान्त्यभागस्तूभयोरपि A. S. प्रत्योर्न लभ्यते, अतस्तत्र किं लिखितं स्यादिति न ज्ञायते । अथापि N. P. प्रत्योः स्त्रीनिर्वाणप्रकरणान्ते "इति स्त्रीनिर्वाणप्रकरणं समाप्तम् ।" इति, केवलिभुक्तिप्रकरणान्ते च "इति केवलीभुक्तिप्रकरणं ॥ इति स्त्रीनिर्वाण-केवलीर्य(य)भुक्तिप्रकरणं(णे) ॥ कृतिरियं भगवदाचार्यशाकटायनभदन्तपादानामिति ॥" इत्युल्लेखदर्शनादस्माभिरेवं नामोल्लेखोऽत्र विहितः । सटीकयोरनयोः प्रकरणयोः प्रारम्भे तु टीकायाम् 'इति स्त्रीनिर्वाणपरिच्छेदः समाप्तः' इत्युल्लेखदर्शनात् 'स्त्रीनिर्वाणपरिच्छेदः' इति, तदनुसारेणैव च 'अथ केवलिभुक्तिपरिच्छेदः' इति नामोल्लेखोऽस्माभिर्विधास्यत इति ध्येयम् ॥

२. अत्रेदमवधेयम्—टीकायां निर्दिष्टाः काश्चन कारिकाः N. P. प्रत्योर्नैव दृश्यन्ते । अपिच टीकायां व्याख्यानावसरे मूलकारिकाणां यः क्रम आदृतः सोऽपि N. P. प्रत्योरादृतात् कारिकाक्रमात् क्वचित् क्वचिद् भिद्यते । अतोऽस्माभिः S. प्रत्यनुसारेणैव कारिका निर्दिष्टाः क्रमश्च आदृतः; किन्तु S. प्रतौ कुत्रापि मूलकारिकाणां संख्याङ्को न दृश्यते । केवलं पत्रत्रयमितायाम् A. प्रतौ स्त्रीनिर्वाणप्रकरणस्यान्त्यानां तिसृणां कारिकाणामन्ते ५२, ५३, ५४ इत्यङ्काः क्रमेण दृश्यन्ते, अतस्तदनुसारेणैव कथञ्चित् सम्भाव्य पञ्चानां संग्रहार्याणां मूलकारिकासु समावेशं च विधाय ५२, ५३, ५४ तः प्राक्तनीनां मूलकारिकाणां संख्याङ्कस्तत्र तत्रास्माभिर्निर्देक्ष्यत इत्यवगन्तव्यं सुधीभिः ॥

रत्नत्रयं विरुद्धं स्त्रीत्वेन यथाऽमरादिभावेन ।
इति वाङ्मात्रं, नात्र प्रमाणमाप्तागमोऽन्यद् वा ॥ ३ ॥
जानीते जिनवचनं, श्रद्धत्ते, चरति चार्यिका[ऽ]शबलम् ।
नाऽस्याऽस्त्यसंभवोऽस्यां, नादृष्टविरोधगतिरस्ति ॥ ४ ॥
सप्तमपृथिवीगमनाद्यभावमव्याप्तमेव मन्यन्ते ।
निर्वाणाभावेनाऽपश्चिमतनवो न तां यान्ति ॥ ५ ॥
विषमगतयोऽप्यधस्ताद् उपरिष्टात् तुल्यमासहस्रारम् ।
गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतुः ॥ ६ ॥
वादविकुर्वाणत्वादिलब्धिविरहे श्रुते कनीयसि च ।
जिनकल्प-मनःपर्यवविरहेऽपि न सिद्धिविरहोऽस्ति ॥ ७ ॥
वादादिलब्ध्यभाववदभविष्यद् यदि च सिद्ध्यभावोऽपि ।
सा[२]ऽऽसामवारयिष्यत यथैव जम्बूयुगादारात् ॥ ८ ॥
'स्त्री'ति च धर्मविरोधे प्रव्रज्यादोषविंशतौ 'स्त्री'ति ।
बालादिवद् वदेयुर्न '[३]गर्भिणी बालवत्से'ति ॥ ९ ॥
यदि वस्त्रादविमुक्तिः, त्यज्येत तद्, अथ न कल्पते हातुम् ।
मुक्त्यङ्गं प्रतिलेखनवद्, अन्यथा देशको [४]दुष्येत् ॥ १० ॥
त्यागे सर्वत्यागो ग्रहणेऽल्पो दोष इत्युपादेशि ।
वस्त्रं गुरुणाऽऽर्याणां परिग्रहोऽपीति भुक्त्यादौ ॥ ११ ॥
"यत् [५]संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोऽन्यदधिकरणमाहाऽर्हन् ॥
[६]अस्तैन्यबाहिरव्युत्सर्गविवेकैषणादिसमितीनाम् ।
उपदेशनमुपदेशो ह्युपधेरपरिग्रहत्वस्य ॥"

---

१. योगशास्त्रस्वोपज्ञवृत्तौ [३-१२०] उद्धृतेयं कारिका पृ० २०८ A ॥
२. तासामवारयिष्यद् N. P. ॥
३. गुर्विणी N.
४. दूष्येत P. । दूष्येत् N. ॥
५. "अस्मिन्नर्थे भगवदाचार्यशिवस्वामिनः सिद्धिविनिश्चये युक्त्यभिधायि आर्याद्वयमाह" इति [पृ०१९] वक्ष्यमाणटीका-ग्रन्थानुसारेण अनयोरार्ययोर्ग्रन्थान्तरादुद्धृतत्वादत्र कारिकाङ्कोऽस्माभिर्न दत्त इति ध्येयम् ॥
६. अस्तेय S. । (अस्तेय ?) ॥

निर्ग्रन्था (न्थी) व्यपदेशः शास्त्रे सर्वत्र नैव युज्येत ।
उपधेर्ग्रन्थत्वेऽस्याः पुमानपि तथा न निर्ग्रन्थः ॥ १२ ॥

[1] 'अपरिग्रह एव भवेद् वस्त्राभरणाद्यलङ्कृतोऽपि पुमान् ।
ममकारविरहितः, सति ममकारे सङ्गवान् नग्नः ॥ १३ ॥[2]

आचार्याद्यासक्तं स्वयमादित नो मुमुक्षुका लोभात् ।
उपसर्गाद्यासक्तमिवाम्बरमपरिग्रहस्तस्याः ॥ १४ ॥

काये ममकारेऽपि च सपरिग्रह एव नैव मुक्तः स्यात् ।
तत्र यथा संलग्ने नो ममकारस्तथा वस्त्रे ॥ १५ ॥

[3] ग्रामं गेहं च विशन् कर्म च नोकर्म चाददानोऽपि ।
अपरिग्रहोऽममत्वोऽपरिग्रहो नान्यथा कश्चित् ॥ १६ ॥'

— इति सङ्ग्रहार्याः ।

संसक्तौ सत्यामपि चोदितयत्नेन परिहरन्त्यार्या[4] ।
हिंसावती पुमानिव न जन्तुमालाकुले लोके ॥ १७ ॥

[5] गृहिणो ममत्वयोगात् संयमसाधनगृहीत्यभावाच्च ।
अयतं चरतश्चरणं न विद्यते तेन नो मोक्षः ॥ १८ ॥

[6] त्रिस्थानोक्ता दोषास्त्रयो[7][ऽ]पदेशा यते[ः] सचेलत्वे ।
अपरिषहसहिष्णुत्वं ह्रीश्च जुगुप्सा च देहस्य ॥ १९ ॥

वस्त्रं विना न चरणं स्त्रीणामित्यर्हतौच्यत, विनापि ।
पुंसामिति न्यवार्यत, तत्र स्थविरादिवन्मुक्तिः ॥ २० ॥

अर्शोभगन्दरादिषु गृहीतचीरो यतिर्न मुच्येत ।
उपसर्गे वा चीरेऽङ्गादिः संन्यस्यते चान्ते ॥ २१ ॥

---

१. एताश्चतस्रः सङ्ग्रहार्याः N. P. मध्ये न सन्ति ॥
२. योगशास्त्रस्वोपज्ञवृत्तौ [२–१०६] उद्धृतेयं कारिका पृ० १४२ B ॥
३. योगशास्त्रस्वोपज्ञवृत्तौ [२–१०६] उद्धृतेयं कारिका पृ० १४३ A ॥
४. ०न्त्यार्याः N. P. ॥
५. इदं कारिकाद्वयं N. P. नास्ति ॥
६. अस्या मूलकारिकात्वे सन्देहः, टीकायामव्याख्यातत्वात् ॥
७. '०स्त्रयोपदेशाय ते सचेलत्वे' इति S. टिप्पणानुसारेण पाठः ॥

मुक्त्यङ्गमचेलत्वं नोच्येत तदन्यथा नरस्यापि ।
आचेलक्यायोग्याऽयोग्या सिद्धेरदीक्ष्य[1] इव ॥ २२ ॥

इति जिनकल्पादीनां मुक्त्यङ्गानामयोग्य इति सिद्धेः ।
स्यादष्टवर्षजातादिरयोग्योऽदीक्षणीय इव ॥ २३ ॥

संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे ।
योगचिकित्साविधिरिव कस्यापि कथञ्चिदुपकारी ॥ २४ ॥

वस्त्राद् न मुक्तिविरहो भवतीत्युक्तं, समग्रमन्यच्च ।
रत्नत्रयान्न चान्यद् मुक्त्यङ्गं शिष्यते सद्भिः ॥ २५ ॥

प्रव्राजना निषिद्धा क्वचित्तु रत्नत्रयस्य [2]योगेऽपि ।
धर्मस्य हानि-वृद्धी निरूपयद्भिर्विवृद्ध्यर्थम् ॥ २६ ॥

अप्रतिवन्द्यत्वाच्चेत् संयतवर्गेण नार्यिकासिद्धिः ।
वन्द्यन्तां ता यदि तेनोनत्वं कल्प्यते तासाम् ॥ २७ ॥

सन्त्यूनाः पुरुषेभ्यस्ताः स्मारणवारणादिकारिभ्यः ।
तीर्थकराकारिभ्यो न[3] तावता[ऽ]सिद्धिरङ्गगतेः[4] ॥ २८ ॥

अर्हन् न वन्दते न च जिनकल्पादिरिति गणधरादीनाम् ।
प्राप्ताऽन्यथा[ऽ]विमुक्तिः, स्थानं स्त्रीपुंसयोस्तुल्यम् ॥ २९ ॥

'ये[5] यान्न मुक्तिभाजो वन्दन्ते ते तथैव मुच्यन्ते ।
इत्यप्यवन्दनं स्यान्नामोक्षोऽवन्दनात् तेन ॥ ३० ॥'

इति सङ्ग्रहार्या ।

अपकृष्यते श्रिया स्त्री पुंसः सर्वत्र किं न तन्मुक्तौ ।
इत्यमुनाऽक्षेप्यस्त्रीपुंसाः सिद्धाः, सममरुक्त्वम् ॥ ३१ ॥

मायादिः पुरुषाणामपि देशादिप्रसिद्ध्यभावश्च ।
षण्णां संस्थानानां तुल्यो वर्णत्रयस्यापि ॥ ३२ ॥

---

१. ०रदीक्ष इव N. S. ॥
२. योग्ये N. ॥
३. न च जिनकल्पादिरिति गणधरादीनाम्। अर्हन् न वन्दते न तावताऽसिद्धिरङ्गगतेः ॥ P. ॥
४. 'अङ्गगतेः' शरीरगमनस्य अशरीरिभावस्येत्यर्थो भाति। अथवा 'अङ्ग' इत्यामन्त्रणे, 'गतेः' सिद्धिगतेरित्यर्थः ॥
५. इयं संग्रहार्या N. P. मध्ये नास्ति ।

स्त्री नाम मन्दसत्त्वा मुक्त्यङ्गसमग्रता न तेनात्र ।
तत् कथमनल्पधृतयः सन्ति हि शीलाम्बुनिधिवेलाः ।। ३३ ।।

[१]ब्राह्मी सुन्दर्यार्या राजिमती चन्दना गणधरान्या[ः]।
अपि [२]देवासुरसहिता विख्याताः शीलसत्त्वाभ्याम् ।। ३४ ।।

गार्हस्थ्येऽपि सुसत्त्वा विख्याताः [३]शीलवतितमा जगति ।
[४]सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ।। ३५ ।।

सन्त्यज्य राज्यलक्ष्मीं पति-पुत्र-भ्रातृ-बन्धुसम्बन्धम् ।
पारिव्राज्य[५]वहायाः किमसत्त्वं सत्यभामादेः ।। ३६ ।।

महता पापेन स्त्री मिथ्यात्वसहायकेन, न सुदृष्टिः ।
स्त्रीत्वं चिनोति, तन्न तदङ्गे [६]क्षपणेति निर्मानम् ।। ३७ ।।

अन्तःकोटीकोटीस्थितिकानि भवन्ति सर्वकर्माणि ।
सम्यक्त्वलाभ एवाशेषाघक्षयकरो मार्गः ।। ३८ ।।

'अष्टशतमेकसमये पुरुषाणा'मादिरागमः सिद्धौ ।
स्त्रीणां, न मुख्ययोगे गौणोऽर्थो [७]मुख्यहानिर्वा ।। ३९ ।।

शब्दनिवेशनमर्थः, प्रत्यासत्त्या क्वचित् कयाचि[८]दसः ।
तदयोगे, योगे सति शब्दस्यान्यः कथं कल्प्यः ।। ४० ।।

[९]अव्यभिचारी मुख्योऽविकलोऽसाधारणोऽन्तरङ्गश्च ।
विपरीतो गौणोऽर्थः, सति मुख्ये धीः कथं गौणे ।। ४१ ।।

स्तनजघनादिव्यङ्ग्ये स्त्रीशब्दोऽर्थे, न तं विहायैषः ।
दृष्टः क्वचिद्, अन्यत्र त्वग्निर्माणवकवद् गौणः ।। ४२ ।।

---

१. एतास्तिस्रः कारिका योगशास्त्रस्वोपज्ञवृत्तौ [३–१२०] उद्धृताः पृ० २०७ B ।।
२. देवमनुजमहिताः N. P. ।।
३. न्यायावतारवार्तिकवृत्तौ [पृ० १२१] न्यायकुमुदचन्द्रे च [पृ० ८६९] उद्धृतेयं कारिका ।।
४. शीता° N. P. S. ।।
५. सहायाः N. ।।
६. क्षपणेऽपि P. ।।
७. मुख्यहानं वा S. ।।
८. °दपि सः N. । °दतः P. ।।
९. इयं कारिका P. नास्ति ।।

आ षष्ठ्याः स्त्रीत्यादौ स्तनादिभिः स्त्री स्त्रिया इति च वेदः ।
स्त्रीवेदः स्त्र्यनुबन्धात् पल्यानां शतपृथक्त्वोक्तिः ॥ ४३ ॥

न च पुंदेहे स्त्रीवेदोदयभावे प्रमाणमङ्गं च ।
भावः सिद्धौ, पुंवत् पुमान् स्त्र्यपि, न सिध्यतो वेदः ॥ ४४ ॥

क्षपकश्रेण्यारोहे वेदेनोच्येत भूतपूर्वेण ।
'स्त्री'ति नितराममुख्ये मुख्येऽर्थे युज्यते [१]नतराम् ॥ ४५ ॥

मनुषीषु मनुष्ये च चतुर्दशगुणोक्तिरार्यिकासिद्धौ ।
भावस्तवोपरिक्षय्यनवस्थो[२]ऽनियत उपचारः ॥ ४६ ॥

[३]अनडुह्याऽनड्वाहीं दृष्ट्वाऽनड्वाहमनडुहाऽऽरूढम् ।
स्त्रीपुंसेतरवेदो वेद्यो नाऽनियमतो वृत्तेः ॥ ४७ ॥

विगतानुवादनीतौ सुरकोपादिषु चतुर्दश गुणाः स्युः ।
न च मार्गणान्तर इति प्रोक्तं वेदेऽन्यथा नीतिः ॥ ४८ ॥

पुंसि स्त्रियां स्त्रियां पुंस्यन्तश्च तथा भवेद् विवाहादिः ।
यतिषु न संवासादिः स्यादगतौ निष्प्रमाणेष्टिः ॥ ४९ ॥

पञ्चेन्द्रियाद्युदयवत् सुरनरगत्यादिकर्मणामुदयः ।
वेदस्य तत्तदङ्गे [४]नपुंसकादिवदु नरकादौ ॥ ५० ॥

नाम तदिन्द्रियलब्धेरिन्द्रियनिर्वृत्तिमिव पुमाद्यङ्गम् ।
वेदोदयाद् विरचयेदित्यतदङ्गे न तद्वेदः ॥ ५१ ॥

या पुंसि च प्रवृत्तिः पुंसः स्त्रीवत् स्त्रियाः स्त्रियां च स्यात् ।
सा स्वकवेदात् तिर्यग्वदलाभे मत्तकामिन्याः ॥ ५२ ॥

---

१. नेतराम् N. P. ॥

२. °वस्थे S. ॥

३. "पुंसि ... ॥ पञ्चेन्द्रि ... ॥ अनडु ... ॥ नाम ... ॥ या पुंसि ... ॥ मनुजगतौ ... ॥ विगतानु ... ॥" इति N. प्रतौ क्रमः। P. प्रतावप्येवमेव क्रमः, किन्तु तत्र "पञ्चेन्द्रि ... ॥ मनुजगतौ ... ॥" इति कारिकाद्वयं न विद्यते ॥

४. °व ... सिद्धौ N. ॥

मनुजगतौ सन्ति गुणाश्चतुर्दशेत्याद्यपि प्रमाणं स्यात् ।
पुंवत् स्त्रीणां सिद्धौ [1]नापर्याप्तादिवद् बाधा ।। ५३ ।।

न च बाधकं विमुक्तेः स्त्रीणामनुशासनं प्रवचनं च ।
सम्भवति च मुख्येऽर्थे न गौण इत्यार्यिकासिद्धिः ।। ५४ ।।

।। [2]इति स्त्रीनिर्वाणप्रकरणं समाप्तम् ।।

---

१. नापर्याप्त्यादि० A. S. ।।

२. इति स्त्रीनिर्वाणपरिच्छेदः समाप्तः A. S. ।।

# [1]अथ केवलिभुक्तिप्रकरणम् ।

अस्ति च केवलिभुक्तिः समग्रहेतुर्यथा पुरा, भुक्तेः ।
पर्याप्ति-वेद्य-तैजस-दीर्घायुष्कोदयो हेतुः ।। १ ।।

*[2]नष्टानि न कर्माणि क्षुधो निमित्तं, विरोधिनो न गुणाः ।
ज्ञानादयो जिने किं सा संसारस्थितिर्नास्ति ।। २ ।।

तम इव भासो वृद्धौ ज्ञानादीनां न तारतम्येन ।
क्षुद्धीयतेऽत्र* न च तज्ज्ञानादीनां विरोधगतिः ।। ३ ।।

अविकलकारणभावे तदन्यभावे भवेदभावेन ।
इदमस्य विरोधीति [3]ज्ञानं न तदस्ति केवलिनि ।। ४ ।।

क्षुद् दुःखमनन्तसुखं विरोधि तस्येति चेत् कुतस्त्यं तत् ।
ज्ञानादिवन्न तज्जं विरोधि न परं ततो दृष्टम् ।। ५ ।।

आहारविषयकाङ्क्षारूपा क्षुद् भवति भगवति विमोहे ।
कथमन्यरूपतास्या न लक्ष्यते येन जायेत ।। ६ ।।

न क्षुद् विमोहपाको यत् प्रतिसङ्ख्यानभावननिवर्त्या ।
न भवति, विमोहपाकः सर्वोऽपि हि तेन विनिवर्त्यः ।। ७ ।।

शीतोष्णबाधतुल्या क्षुत् तत् तत्प्रतिविधानकाङ्क्षा तु ।
मूढस्य भवति मोहात् [4]तया भृशं बाध्यमानस्य ।। ८ ।।

[5]तैजसमृदूकृतस्य द्रव्यस्याभ्यवहृतस्य पर्याप्त्या ।
[6]उत्तरपरिणामे क्षुत् क्रमेण भगवति च तत् सर्वम् ।। ९ ।।

---

१. दृश्यतां पृ० १ टि० १ ।।
२. अत्र कतिपयांशस्य टीकायां खण्डितत्वात् * * एतच्चिह्नान्तर्गतः पाठः टीकायां नोपलभ्यते ।।
३. ज्ञाने N. P. ।।
४. तथा P. ।।
५. इतः परं भूयसां टीकापत्राणामनुपलब्धेः अष्ट आर्याष्टीकायां नोपलभ्यन्ते ।।
६. अनुत्तर° N. P. ।।

ज्ञानावरणीयादेर्ज्ञानावरणादि कर्मणः कार्यम् ।
क्षुत् तद्विलक्षणा[1]ऽस्यां न तस्य सहकारिभावोऽपि ॥ १० ॥

[2]क्षुद्बाधिते 'न जाने, न चेक्ष[3]' इत्यस्ति ननु विपर्यासः ।
तद्वेद्यं सहकारि तु तस्य, न तद् वेद्यसहकारि ॥ ११ ॥

ज्ञानावरणादीनामशेषविगमात्[4] क्षुधि प्रजातायाम् ।
अपि तज्ज्ञानादीनां हानिः स्यादितरवत् तत्र ॥ १२ ॥

नष्टविपाकः(का) क्षुदिति प्रतिपत्तौ भवति चागमविरोधः ।
शीतोष्ण-क्षुद्-उदन्यादयो हि ननु वेदनीय इति ॥ १३ ॥

[5]उदये फलं न तस्मिन्नुदीरणेत्यफलता न वेद्यस्य ।
नोदीरणा फलात्मा तथा भवेदायुरप्यफलम् ॥ १४ ॥

अनुदीर्णवेद्य इति चेद् न क्षुद्, वीर्यं किमत्र, न हि वीर्यम् ।
क्षुदभावे, क्षुदभावे न स्थित्यै क्षुधि तनोर्विलयः ॥ १५ ॥

अपवर्तते[ऽ]कृतार्थं नायुर्ज्ञानादयो न हीयन्ते ।
जगदुपकृतावनन्तं वीर्यं किं गततृषो भुक्तिः ॥ १६ ॥

ज्ञानाद्यलयेऽपि जिनेऽमोहेऽपि स्यात् क्षुदुद्भवे भुक्तिः ।
वचन-गमनादिवच्च प्रयोजनं स्वपरसिद्धिः स्यात् ॥ १७ ॥

ध्यानस्य समुच्छिन्नक्रियस्य [7]चरमक्षणे गते सिद्धिः ।
सा नेदानीमस्ति स्वस्य परेषां च कर्तव्या ॥ १८ ॥

रत्नत्रयेण मुक्तिर्न विना तेनास्ति चरमदेहस्य ।
भुक्त्या तथा तनोः स्थितिरायुषि नन्वनपवर्त्येऽपि ॥ १९ ॥

---

१. °णास्यान्न तस्य N. ॥

२. क्षुद् वावते N. ॥

३. 'ननु क्षुद्ब ाविते पुरुषे 'नाहं जाने, न चेक्षे' इति विपर्यासोऽस्तीति चेत्' इत्याशयोऽत्र भाति । तुलना — "अस्मदादौ हि क्षुत्प्रभवपीडाक्रान्ते ज्ञानादेरभावः सुप्रतीतः, 'क्षुत्पीडितोऽहं न किञ्चिज्जानामि, न किञ्चित् पश्यामि, उत्थातुमपि न शक्नोमि' इति प्रतीतेः ।" — न्यायकुमुदचन्द्रे पृ० ८६१ पं० २३ ॥

४. विगमा क्षुवि P. ॥

५. उदयं P. ॥

६. क्षुदुद्गते भुक्तिः S. ॥

७. चरमे N. ॥

[1]असति क्षुद्बाधेऽङ्गे लये न शक्तिक्षयो न संक्लेशः ।
आयुश्चानपवर्त्तं[2] बाधलयौ प्राग्वदधुनापि ॥ २० ॥
देशोनपूर्वकोटीविहरणमेवं सतीह केवलिनः ।
सूत्रोक्तमुपापादि न, मुक्तिश्च न नियतकाला स्यात् ॥ २१ ॥
अपवर्तहेत्वभावोऽनपवर्त[2]निमित्तसंपदायुष्के ।
स्यादनपवर्त इति तत् केवलिभुक्तिं समर्थयते ॥ २२ ॥
आयुरिवाभ्यवहारो जीवनहेतुर्विनाऽभ्यवहृतेश्च ।
तिष्ठत्यनन्तवीर्यो विनायुषा[ऽऽ]कालमपि तिष्ठेत् ॥ २३ ॥
न ज्ञानवदुपयोगो वीर्ये कर्मक्षयेण लब्धिस्तु ।
तत्रायुरिवाहारोऽपेक्ष्येत न तत्र बाधास्ति ॥ २४ ॥
मासं वर्षं वापि च तानि शरीराणि तेन भुक्तेन ।
तिष्ठन्ति न चाकालं, [3]न वान्यथा पूर्वमपि भुक्तिः ॥ २५ ॥
तैलक्षये न दीपो न जलागममन्तरेण जलधारा ।
तिष्ठति तनोस्तथा स्थितिरपि न विनाहारयोगेन ॥ २६ ॥
कायस्तथाविधोऽसौ जिनस्य [4]यदभोजने स्थितिरितीदम् ।
वाङ्मात्रं नात्रार्थे प्रमाणमाप्तागमोऽन्यद् वा ॥ २७ ॥
अस्वेदादि प्रागपि सर्वाभिमुखादि तीर्थकरपुण्यात् ।
स्थितनखतादि सुरेभ्यो नाक्षुद् देहान्यता वास्ति ॥ २८ ॥
भुक्तिर्दोषो यदुपोष्यते न दोषश्च भवति निर्दोषे ।
इति निगदतो निषद्यार्हति न स्थानयोगादेः ॥ २९ ॥
रोगादिवत् क्षुधो न व्यभिचारो वेदनीयजन्मायाः ।
प्राणिन्येकादश जिन इति जिनसामान्यविषयं च ॥ ३० ॥

---

१. अत्र N. P. मध्ये इत आरभ्य कारिकाणामन्यथा क्रमः। तथाहि—
"आयुरिवा ...॥ न ज्ञानव ...॥ मासं वर्षं ...॥असति क्षुद्बाधे ...॥देशोनपूर्व ...॥ अपवर्त ...॥ कायस्तथा ...॥ अस्वेदादि ...॥ भुक्तिर्दोषो ...॥ रोगादिवत् ...॥ तद्धेतुकर्म ...॥ तैलक्षये ...॥ परमाव ...॥" P. । N. प्रतावप्येवमेव क्रमः, किन्तु तत्र "न ज्ञानव° ...॥' इति कारिका नास्त्येव॥
२. °नपवर्त्यं P. । °नपवर्त्यं N.॥
३. न चान्यथा N. । चान्यथा P. ॥
४. यदभोजनस्थिति° P. S.॥

तद्धेतुकर्मभावात् परीषहोक्तिर्न जिन उपस्कार्यः ।
[1]नञ् नाऽभावासिद्धेरित्यादेर्न[:] क्षुदादिगतिः ।। ३१ ।।

परमावधियुक्तस्य छद्मस्थस्येव नान्तरायोऽपि ।
सर्वार्थदर्शने स्यात् न चान्यथा पूर्वमपि भुक्तिः ।। ३२ ।।

इन्द्रियविषयप्राप्तौ यदभिनिबोधप्रसञ्जनं भुक्तौ ।
तच्छब्द-रूप-गन्ध-स्पर्शप्राप्त्या [2]प्रतिक्षिप्तम् ।। ३३ ।।

छद्मस्थे तीर्थकरे विष्वणनानन्तरं च केवलिनि ।
[3]चिन्ता मलप्रवृत्तौ या सैवात्रापि भुक्तवति ।। ३४ ।।

विग्रहगतिमापन्नाद्यागमवचनं च सर्वमेतस्मिन् ।
भुक्तिं ब्रवीति तस्माद् द्रष्टव्या केवलिनि भुक्तिः ।। ३५ ।।

[4]नाऽनाभोगाहारो निरन्तरः सोऽविशेषितो नञ्वत् ।
[5]युक्त्याऽभेदे नाङ्गस्थिति-पुष्टि-क्षुच्छमास्तेन ।। ३६ ।।

तस्य विशिष्टस्य स्थितिरभविष्यत् तेन सा विशिष्टेन ।
यद्यभविष्यदिहैषां शालीतरभोजनेनेव ।। ३७ ।।

।। इति केवली(लि)भुक्तिप्रकरणम् ।।

।। इति स्त्रीनिर्वाण-केवलीय[6]भुक्तिप्रकरणं(णे) ।।

।। कृतिरियं भगवदाचार्यशाकटायनभदन्तपादानामिति ।।

---

१. नञ्चाभावासिद्धे N. P. ।।
२. प्रतिव्यूढम् N. P. ।।
३. चित्तामलप्रवृत्तौ व्यासैवा° N. P. ।।
४. नानाभोगाहारः सो विशेषितो नाभूत् P. ।।
५. इतः आरभ्य सटीकायाः S. प्रतेरनुपलम्भात् पाठोऽयं शुद्धोऽशुद्धो वेति ज्ञातुं न पार्यते ।।
६. केवलीयं P. ।।

॥ श्रीशंखेश्वरपार्श्वनाथाय नमः ॥

॥ श्रीसद्गुरुदेवेभ्यो नमः ॥

यापनीययतिग्रामाग्रणीभदन्तशाकटायनाचार्यविरचिते स्वोपज्ञटीकालङ्कृते

# स्त्रीनिर्वाण-केवलिभुक्तिप्रकरणे

तत्राद्यः

## ॥ स्त्रीनिर्वाणपरिच्छेदः[1] ॥

[[2]प्रणिपत्य भुक्तिमुक्तिप्रदममलं धर्ममर्हतो दिशतः ।
वक्ष्ये स्त्रीनिर्वाणं केवलिभुक्तिं च संक्षेपात् ॥ १ ॥[3]

अस्ति स्त्रीनिर्वाणं पुंवद् यदविकलहेतुकं ][2a] स्त्रीषु ।
न विरुध्यते हि रत्नत्रयसंपद् निर्वृतेर्हेतुः ॥ २ ॥

सम्यग्दर्शन-ज्ञान-चारित्राणामन्यूनता संसारज्वरविमोक्षस्य हेतुः । यत्र तानि सम्पन्नानि ते संसाराद् विप्रमुच्यन्ते । न चैतेषां स्त्रीषु केनचिद् विरोधः सिद्धो येन निर्वाणकारणवैकल्यमिति स्त्रीषु निर्वाणाभावः स्यात् ।

**रत्नत्रयं विरुद्धं स्त्रीत्वेन यथाऽमरादिभावेन ।**

अथोच्येत — स्त्रीषु स्त्रीत्वेनैव तावद् रत्नत्रयं विरुध्यते । न चैतन्नास्ति 'रत्नत्रयस्य केनचिद् विरोधः' इति, अभ्युपगम्यते हि देव-नारक-तिर्यग्-भोगभूमिजादिभावेन विरोध इति ।

---

१. दृश्यतां पृ० १ टि०१ ॥

२. S. आदर्शे प्रथमपत्रस्यानुपलब्धेः N. P. आदर्शानुसारेण [ ] एतदन्तर्गतो मूलपाठः परिपूरितः ॥

३. दृश्यतां पृ०१ टि०२ ॥

**इति वाङ्मात्रं नात्र प्रमाणमाप्तागमोऽन्यद्वा ॥ ३ ॥**

यदेतदुक्तमेतद् वाङ्मात्रम्, न प्रमाणोपपन्नम् । अविकलकारणस्य हि भवतोऽन्यभावेऽभावाद् [1]विरोध इति । स चाभावः प्रमाणात् प्रतिपत्तव्यः । तच्च प्रमाणं प्रत्यक्षमनुमानमागमो[2b] वा स्यात् । न प्रत्यक्षेणात्र प्रतीयते । नानुमानेन, अन्यथानुपपद्यमानस्य लिङ्गस्यानुपलक्षणात् । न च गणधर-प्रत्येकबुद्ध-श्रुतकेवलि-दशपूर्विणामविगीतं वचनमत्रोपलभामहे यथा देवादिषु सुर-नारएसु चत्तारि होंति तिरिएसु जाण पंचेव [[2]पञ्चसं० ४-१०] इति, येनात्र विरोधनिर्णयः स्यात् । न चान्यत्राभाव इत्यत्राप्यभावः । न हि बलाकायां कार्ष्ण्याभाव इति काकेऽपि तदभावः । न चाप्रमाणकं शक्यमभ्युपगन्तुम्, अतिप्रसङ्गात् ।

**जानीते जिनवचनं श्रद्धत्ते चरति [3]चार्यिका[ऽ]शबलम् ।**

जिनवचनस्य यथावदवगमः सम्यग्ज्ञानम्, 'इदमित्थमेव' इति तस्य श्रद्धानं सम्यग्दर्शनम्, तदुक्तस्य यथावदनुष्ठानं सम्यक्चारित्रम्, एतद् रत्नत्रयं नाम । अस्य सम्पत्तौ सर्वकर्मविप्रमोक्षलक्षणो मोक्षः । तदुक्तम् — [4]सम्यग्दर्शन-ज्ञान-चारि[3a]त्राणि मोक्षमार्गः [तत्त्वार्थ. १।१] इति । प्रतीयते चैतत् त्रितयं स्त्रीषु ।

**नास्यास्त्यसम्भवोऽस्याम्**

नास्य त्रितयस्य स्त्रीष्वसम्भवः प्रतीयते येनास्य स्त्रीषु विरोधोऽभ्युपगम्यते ।

अथोच्येत — अस्तु नामास्यात्र सम्भवः । न च तावता मुक्तिः, दीक्षानन्तरं सर्वेषां मुक्तिप्रसङ्गात् । अपि तु रत्नत्रयस्य प्रकर्षपर्यन्तप्राप्तौ, सा च न स्त्रीष्विति न तदस्ति ।

**नादृष्टविरोधगतिरस्ति ॥ ४ ॥**

रत्नत्रयप्रकर्षपयन्तोऽयोगिचरमक्षणो यदनन्तरं मुक्तिः सोऽस्माकमप्रत्यक्षः, न तादृशस्यास्माभिर्विरोधः शक्यते ग्रहीतुम् । अप्रतिपन्नविरोधस्य च न तस्य तत्राभावः शक्यो विज्ञातुम् । न चाविरोधी भावो निवर्तयति ।

---

१. अत्र 'विरोधगतिः' इति पाठः शोभनः प्रतीयते । दृश्यतां केवलिमुक्तिप्रकरणे पृ. 43a । तुलना — "द्विविधो हि पदार्थानां विरोधः — अविकलकारणस्य भवतोऽन्यभावेऽभावाद् विरोधगतिः शीतोष्णस्पर्शवत्, परस्परपरिहारलक्षणतया वा भावाभाववत् ।" इति बौद्धाचार्यधर्मकीर्तिविरचिते न्यायबिन्दौ तृतीयपरिच्छेदे ॥

२. "सुरनारएसु चत्तारि होंति तिरिएसु जाण पंचेव । मणुयगदीए वि तहा चउदस गुणनामधेयाणि ॥" इति सम्पूर्णा गाथा दैगम्बरे पञ्चसंग्रहे चतुर्थे शतकप्रकरणे । अस्या व्याख्या — "अथ मार्गणास्थानेषु रचितगुणस्थानानि गाथाचतुर्दशकेन प्रल्पयति देवगत्यां नरकगत्यां च मिथ्यादृष्ट्यादीनि चत्वारि गुणस्थानानि । तिर्यग्गतौ मिथ्यादीनि पञ्च गुणस्थानानि त्वं जानीहि । मनुष्यगतौ मिथ्यादृगाद्ययोगान्तानि चतुर्दश गुणस्थानानि भवन्तीति जानीहि त्वं मन्यस्व ॥" इति दिगम्बरपञ्चसंग्रहान्तर्गतशतकटीकायाम्, पृ. ९८ [भारतीय ज्ञानपीठ, काशी] ॥ ३. चार्यिकाः S ॥ ४. सम्यग्ज्ञानचारित्राणि S. ॥

अथोच्येत – असन्निर्वाणाः स्त्रियः, असप्तमपृथिवीगमनत्वात्, वादादिलब्धिविरहितत्वात्, अल्पश्रुतत्वात्, असज्जिनकल्पत्वात्, मनःपर्यायज्ञानविरहितत्वा[3b]त्, अनुपस्थाप्य-पाराञ्चितक-शून्यत्वात् । य एवंविधा न ते निर्वान्ति यथा संमूर्छिमादयः, तथाविधाश्च स्त्रियः, तथाहि –

**संमुच्छिमभुजखयरा चउप्पयसप्पित्थिजलचरेहिंतो ।**
**सत्तसु कमोववज्जंति निरएसु ॥**

इत्यादिरागम इति । तदसत्

**सप्तमपृथिवीगमनाद्यभावमव्याप्तमेव मन्यन्ते ।**
**निर्वाणाभावेन**

विद्वांसः । 'साध्यस्य साधनभावे भाव एव, साधनस्य साध्यभाव एव भावः' व्याप्तिः । सा यदा प्रमाणेन निर्णीता तदा साध्येन व्याप्तो हेतुः साध्यधर्मिणि प्रसिद्धस्तत्र साधर्म्यं भाव-रूपमभावरूपं वा गमयति यथा – अस्त्यत्राग्निः धूमात्, वृक्षोऽयं शिंशपात्वात्; नास्तीह घट उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः, नास्तीह शीतस्पर्शः अग्नेः, नेह शिंशपा वृक्षाभावात्, नैकान्तेन नित्य[4a]मनित्यं वा वस्तु अर्थक्रियाकारित्वादिति । नाव्याप्तिरनिर्णीतव्याप्तिर्वा हेतुः, अतिप्रसङ्गात् । तत्र नैतेषु साधनेषु व्याप्तिरस्ति, सप्तमपृथिवीगमनादीनां निर्वाणं प्रत्यकारणत्वादव्यापकत्वाच्च । न हि सप्तमपृथिवीगमनादि निर्वाणस्य रत्नत्रयवत् कारणं सिद्धगुणाष्टकवद् व्यापकं वा येन तदभावे निर्वाणाभावः स्यात् । न ह्यकारण-व्यापकस्य तस्मिन्ननियतस्य विनिवृत्त्या नियमेन निवृत्तिर्भवति । न हि 'स गोमान् अनश्वत्वात्, वक्ता वा रागाद्यभावात्' इति नियमेन तथाभावो गम्यते, तथा प्रतिबन्धाभावात् । न केवलं सन्दिग्धव्याप्तिकान्येवैतानि साधनानि, अपि तु निर्णीतश्चात्र व्यभिचारः, तथाहि –

**अपश्चिमतनवो न तां यान्ति ॥ ५ ॥**

येषां ततस्तनोः पश्चिमा तनुर्नास्ति ते चरमदेहास्तेनैव जन्मना मुक्तिभाजो न[4b] तां सप्तमीं पृथिवीं गच्छन्ति, अपश्चिमतनुत्वविरोधात्, अथ च मुच्यन्ते । तस्माद् 'असप्तमपृथिवीगम-नात्' इत्यनैकान्तिको हेतुः । या चेयमाशा 'सप्तमपृथिवीगमनाभावो हि तन्निर्वर्तनसमर्थ-कर्मार्जनसामर्थ्याभावात्, एवं च प्रतिपन्नासामर्थ्या स्त्री यथा तीव्राशुभपरिणामेऽसमर्था तथो-त्कृष्टशुभपरिणामेऽपि, उत्कृष्टशुभपरिणामेन च मुक्तिः' इति सा दुराशा, अनन्तरेणैवास्या-सामर्थ्यस्य प्रतिक्षिप्तत्वात् ।

किञ्च,

**विषमगतयोऽप्यधस्तादुपरिष्टात् तुल्यमासहस्रारम् ।**
**गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतुः ॥ ६ ॥**

१. न्यायावतारवार्तिकवृत्तौ [पृ० १२०] उद्धृतेयं कारिका, तत्र तु ०दधोगतिन्यूनता० इति पाठः ॥

न ह्यधोगतौ स्त्री-पुंसयोरतुल्यं सामर्थ्यमिति शुभगतावप्यतुल्यम्, अशुभपरिणामस्य शुभपरिणामं प्रत्यहेतुत्वात् । तथाहि – तिरश्चां भूजग-खग-चतुष्पात्-सर्प-जलचराणां विषमाऽधोगतिः, शुभगतिः[5a] पुनः समाना, सर्वेऽपि ह्येते सहस्रारान्तोपपाताः

सन्नितिरिक्खेहिंतो साहस्सारंतिएसु देवेसु ।
उप्पज्जंतियरेसु वि सव्वत्थ वि माणुसेहिंतो ।। [ ]

इति वचनात् । तदधोगतिरूनेति न स्त्रीणां शुभगतिनिर्वाणमपि हीयते । तिरश्चां स्वर्गवत् मनुष्याणां मानुषीणां च निर्वाणमपि शुभगतिः समा स्यात् ।

**वाद-विकुर्वाणत्वादिलब्धिविरहे श्रुते कनीयसि च ।**
**जिनकल्प-मनःपर्यवविरहेऽपि न सिद्धिविरहोऽस्ति ।। ७ ।।**

'वादलब्धिः' इन्द्राद्यास्थानेषु बृहस्पत्यादिष्वपि प्रतिबन्धकेषु छल-जात्यादिपरिहारेण तत्त्वप्रतिपादनसामर्थ्यम् । 'विकुर्वाणत्वं' विक्रिया[5b]लब्धिरिन्द्रादिरूपोपादानशक्तिः । 'आदि'-शब्दाच्चारणादिलब्धिपरिग्रहः । एता लब्धयो न स्त्रीणां भवन्ति । श्रुतमङ्गप्रविष्टमङ्गबाह्यं च, तद् दशमपूर्वादि आर्यिकाणां नोपदिश्यते । जिनकल्पो निरपेक्षसंयमः, मनःपर्ययज्ञानम् ऋजु-विपुलमतिभेदं संयतस्याऽन्तर्मानुषोत्तरवलयवर्तितिर्यग्-मनुष्यमनोमतार्थपरिज्ञानम्, एतच्च न स्त्रीणामस्ति । एवमेतेषां ज्ञान-चारित्र-तपोविभवजन्मनामृद्धीनां चाभावेऽपि स्त्रीणां न मोक्षाभावः । न हीत्थमेव मोक्षः,

श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः[1] । [तत्त्वार्थका० २७]

किञ्च,

**वादादिलब्ध्यभाववदभ[6a]विष्यद् यदि च सिद्ध्यभावोऽपि ।**
**सा[ऽऽ]साम्वारयिष्यत यथैव जम्बूयुगादारात् ।। ८ ।।**

यदि च यथा स्त्रीणां वादाद्यतिशयास्तपोविभवजन्मानो न सन्ति तथा मोक्षोऽपि न स्यात् आगमे वादाद्यतिशयाभाववत् तदभावोऽप्युच्येत । न ह्यस्य परिशेषणे किञ्चिन्निबन्धनमीक्ष्यते । न च निर्वाणनिषेधो नास्त्येव । क्रियते ह्यागमे निर्वाणनिषेधः,

सिज्झणा य जंबूहि [2]वोच्छिन्ना [ ] इति ।

---

१. "एकमपि तु जिनवचनाद् यस्मान्निर्वाहकं पदं भवति ।
श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ।।२७।।" इति सम्पूर्णा तत्त्वार्थभाष्यकारिका ।

२. तो छित्तेत्ति S ।

"यदि जिनवचनं प्रमाणं तेन सम्प्रति दुःषमाकाले व्युच्छिन्नो जिनकल्प इति सत्यमेतत् प्रतिपत्तव्यं जिनाभिहितत्वात् जम्बूनामकाले जिनकल्पास्तित्ववत् । एतदर्थज्ञापनायात्र गाथा —

अतः स्त्रीणां निर्वाणाभावोऽप्युच्येत 'स्त्रियो न कदाचिन्निर्वान्ति' इति । न चैवमुच्यते । अतः प्रतिपद्यामहे 'अस्ति स्त्रीनिर्वाणम्' इति ।

अथ मन्येत – यद्यासां संयमः स्यादस्ति निर्वाणप्राप्तिरिति निषिध्येत, तदभावादेव निर्वाणाभाव इति न निर्वाणनिषेध इति । नैतदस्ति, तथा सति तपोविभवजन्मनां वादादिलब्धीनामपि[6b] निषेधो न क्रियेत । तथाऽन्येषामप्राप्तिमतां क्रियते च । अतो विज्ञायते 'अस्ति संयमः' इति ।

किञ्च,

**स्त्रीति च धर्मविरोधे प्रव्रज्यादोषविंशतौ स्त्रीति ।**
**बालादिवद् वदेयुर्न गर्भिणी बालवत्सेति ॥ ९ ॥**

वाले वुड्ढे नपुंसे य जड्डे कीवे य वाहिए ।
तेणे राजावकारी य उम्मत्ते य अदंसणे ॥
दासे दुट्ठे य मूढे य [1]अणत्ते [2]जुंगिय त्ति य ।
[3]ओवद्धए य भयए सिक्खनिप्फेडिए त्ति य ॥
गब्भिणी वालवत्सेति पव्वावेउं न कप्पइ ॥ [निशीथभाष्ये गा० ३५०६–८, पञ्चकल्पभाष्ये गा० १९८–२००]

इति विंशतिरप्रव्राज्याः पठ्यन्ते । तत्र यदि स्त्रीत्येव धर्मेण विरुध्यते यथा बालादिः बालवृद्धादिवत् तत्र 'स्त्री' इत्येव पठ्येत 'स्त्री न प्रव्राजनीया' इति, न विशेषो 'गर्भिणी बालवत्सा' इति । विशेषनिषेधो हि विशेषान्तरपरिग्रहे युज्यते । यदि न कस्यचिद् वि[7a]शेषस्य परिग्रहः सामान्येनैव निषिध्येत । अतो न स्त्रीत्येव धर्मविरोधः । [4]एवन्तावत् स्त्रीत्वमनिर्वाणकारणं नेत्युक्तम् ।

**यदि वस्त्रादविमुक्तिः**

अथैवमुच्येत – वस्त्रपरिग्रहः, स स्त्रीणामस्ति, तस्मान्न ता विमुच्यन्ते । येषां परिग्रहयोगो न ते विमुच्यन्ते यथान्ये गृहस्थाः । अन्यथा पुंसामपि वस्त्रग्रहणं स्यात्, अनर्थकस्त्याग इति । नैतदस्ति,

---

मण-परमोवि-पुलाए आहारग-खवग-उवसमे कप्पे ।
संजमतिय-केवल-सिज्झणा य जंवुम्मि वोच्छिण्णा ॥३०७६॥

मणग्रहणाद् वाक्यैकदेशानुकरणाद् मनःपर्यायज्ञानम्, परमावधिरुत्कृष्टमवधिज्ञानम्, पुलाकलब्धिः, आहारकशारीरकलब्धिः, क्षयोपशमश्रेणिद्वयम्, कल्पग्रहणाज्जिनकल्पः, संयमत्रिकं परिहारविशुद्धि-सूक्ष्मसम्पराय-अथाख्यातानि, केवलज्ञानम्, सिद्धगमनं च । एतेऽर्था जम्बुनाम्नि सुधर्मगणधरशिष्ये व्यवच्छिन्नाः । तस्मिन् सति अनुवृत्ताः, तस्मिन् परिनिर्वाणे व्यवच्छिन्ना इति ।" इति स्वोपज्ञटीकासहिते विशेषावश्यकभाष्ये उद्धृतेयं प्राचीना गाथा पृ० ५९४ ॥

१. ऋणार्तः S टिप्पण्याम् ॥
२. क्षत्तांगुल्यादिः S टिप्पण्याम् ॥
३. उवद्धए य भडए S ॥
४. एतत्तावत् S ॥

**त्यज्येत तत्**

यदि वस्त्रादेर्निर्वाणाभावः, तत्त्यागान्निर्वाणं प्राप्नोति । शक्यते च तत् त्यक्तुम् । न हि तत् प्राणाः । प्राणा अपि त्यज्यन्ते, किं पुनरन्यत् । न हि तदभावे मुक्त्युपगतौ मुक्त्यर्थमुत्थितः कश्चिज्जनो मुक्तिं विनाश्य बालिशश्चीरं गृह्णाति ।

**अथ न कल्पते हातुम् ।**

अथोच्येत —

नो कप्पति निग्गंथीए अचेलाए होत्तए[1] [बृहत्कल्पे उ. ५ सू० १६]

[7b]इत्यागमे आप्तैः स्त्रीणां वस्त्रत्यागो निषिध्यते । तस्माद् यद्यपि वस्त्रं त्यक्तुं शक्यते तथापि न वस्त्रत्यागः स्त्रीणामस्तीति निर्वाणाभावः । अथाप्तवचनमुल्लङ्घ्य वस्त्रं त्यज्येत, न सूत्रोल्लङ्घने चरणम् । आप्तादेशकारिता हि चरणमिति नितरां निर्वाणाभाव इति । एवं तर्हि

**मुक्त्यङ्गं प्रतिलेखनवत्,**

यदि भगवद्भिरर्हद्भिर्मोक्षमार्गप्रणायैः[2] स्त्रीणां वस्त्रमुपदिष्टं वस्त्रत्यागो निषिद्धः तद् वस्त्रं तासां मुक्त्यङ्गं प्रतिपत्तव्यम्, प्रतिलेखनादिवत् ।

**अन्यथा देशको दुष्येत् ।। १० ।।**

यदि न तद् मुक्त्यङ्गं परिग्रहो मुक्तेः प्रतिबन्धकः, तत्त्यागो मिथ्यादर्शनादित्यागवद् युक्तः । तं वारयन् ग्राहयन् वस्त्रं मोक्षप्रतिबन्धि हिंसादेरुपदेष्टेव अर्हद्-गणधर-स्थविरादिर्यस्यायमुपदेशः स दोषदूषितः स्यात् । [8a] ततश्च न कस्यचिद् मुक्तिः स्यात् ।

अथैवं मन्येत —

**त्यागे सर्वत्यागो ग्रहणेऽल्पो दोष इत्युपादेशि ।**

**वस्त्रं गुरुणाऽऽर्याणां परिग्रहोऽपि,**

यदि वस्त्रं स्त्रीभिस्त्यज्येत सर्वस्यैव शीलराशेस्त्यागस्ताभिः कृतो भवति, [3]अभिभूयन्ते हि प्रायेण विवृताङ्गोपाङ्गसन्दर्शनसञ्जातचित्तभेदैः [4]पुरुषैरङ्गना [5]अपाकृतप्रावरणा इव घोटिका घोटैः । गवाश्वादावपि सर्वत्र प्रायेण स्त्रीप्रकृतिरभिभाव्या, पुरुषप्रकृतिरभिभाविका । कुलस्त्रियश्च प्रकृत्या लज्जाभूयिष्ठा वस्त्रत्यागे दीक्षामेव त्यजेयुः । वस्त्रे तु वस्त्रस्य परिग्रहरूप-

---

१. "नो कप्पइ निग्गंथीए अचेलियाए हुंतए" इति बृहत्कल्पे ।।

२. "वा ज्वलादि-दु-नी-भू-ग्रहा-ऽऽस्रोर्णः" [सि. ५-१-६२] इति सूत्रेण बहुलाधिकारात् सोपसर्गादपि नीधातोः णप्रत्यये 'प्रणायैः' इति पाठोऽपि साधुः स्यात् । अत्रारुचौ तु सुधीभिः 'प्रणयैः' इति 'प्रणायकैः' इति वा पाठः कल्पनीयः ।।

३. अभिभूयते S ।।

४. पुरुषैरंगनाः । S ।। ५. "अभिभूयन्ते प्रायेण विवृतांगोपांगसन्दर्शनजनितचित्तभेदैः पुरुषैरंगना अकृतप्रावरणा घोटिकेव घोटकैः" — न्यायकुमु० पृ० ८७२ ।

त्वात् सत्यपि दोषे तद् वस्त्रग्रहणमात्रं दोषः, अन्यत् पुनः सर्वमेव शीलमनुपालितं भवतीति तत्त्यागोपादानयोर्गुणदोषाल्पत्वबहु[8b]त्वनिरूपणेन भगवद्भिरर्हद्भिर्वस्त्रग्रहणं स्त्रीणामुपदिष्टं त्यागो निषिद्धः। ततश्च नाप्तस्य दोषः । न च निर्वाणम्, परिग्रहस्य सदोषत्वात् ।

**इति भुक्त्यादौ ।। ११ ।।**

एतद् भुक्त्यादावपि समानम्, एवं पिण्डोपधिशय्यास्वपि वक्तुं शक्यम् । पिण्डोपधिशय्याश्च गृह्यमाणत्वाद् वस्त्रवत् परिग्रहः 'अल्पो दोषो महान् गुणः' इत्युपदिष्टाः स्युः । ततश्च धर्मसाधनानामपि सूत्रविहितानां परिग्रहत्वमिति पिण्डाद्युपादायिनां पुरुषाणामपि मोक्षाभावः स्यात् । तन्न सूत्रविहितस्य यथासूत्रमुपादीयमानस्य धर्मसाधनस्य परिग्रहत्वं शक्यमभ्युपगन्तुम् ।

अस्मिन्नर्थे भगवदाचार्यशिवस्वामिनः सिद्धिविनिश्चये युक्त्यभ्यधायि आर्याद्वयमाह—

**यत् संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।**
**धर्मस्य हि त[9a]त् साधनमतोऽन्यदधिकरणमाहार्हन् ।।**
**[1]अस्तैन्य-बाहिरव्युत्सर्ग-विवेकैषणादिसमितीनाम् ।**
**उपदेशनमुपदेशो ह्युपधेरपरिग्रहत्वस्य ।।**

किञ्च,

**निर्ग्रन्था(न्थी)व्यपदेशः शास्त्रे सर्वत्र नैव युज्येत ।**
**उपधेर्ग्रन्थत्वेऽस्याः,**

आगमे कल्पादौ सर्वत्र

[2]आमे तालपलंबे भिन्नेऽभिन्ने वा नो कप्पति निग्गंथीणं परिग्गहित्तए [बृहत्कल्पे उ.१ सू.१]

इति स्त्रिया निर्ग्रन्था(न्थी)व्यपदेशः श्रूयते, स यद्युपधिः परिग्रहः स्यात् परिग्रहस्य ग्रन्थत्वाद् गृहस्थस्येव नोपपद्येत

**पुमानपि तथा न निर्ग्रन्थः ।। १२ ।।**

उपधेः संयमसाधनस्य परिग्रहत्वे पुरुषस्यापि निर्ग्रन्थव्यपदेशानुपपत्तिः तस्याप्योघाण्वौपग्रहिकोपधित्रयसद्भा[9b]वात् ।

---

१. अस्त्येयवा० S । (अस्तेय० ?) ।।

२. "नो कप्पइ निग्गंथाण वा निग्गंथीण वा आमे तालपलंबे अभिन्ने पडिगाहित्तए। कप्पइ निग्गंथाण वा निग्गंथीण वा आमे तालपलंबे भिन्ने पडिगाहित्तए।" इति बृहत्कल्पे प्रथमोद्देशे प्रथम-द्वितीयसूत्रे। अत्र यद्यपि द्वितीयसूत्रे भिन्नं तालप्रलम्बमनुज्ञातम् तथापि भाष्ये वृत्तौ च 'भिन्नमपि न कल्पते' इत्यभिहितं विस्तरेण। तथाहि——

"जइ वि निबंधो सुत्ते तहवि जईणं न कप्पइ आमं।
जइ गिण्हइ लग्गति सो पुरिमपदनिवारिए दोसे ।।१००१।।

यद्यपि सूत्रे निबन्धः 'कल्पते भिन्नम्' इतिलक्षणः तथापि यतीनां न कल्पते आमं भिन्नमपि, यदि गृह्णाति ततः स पूर्वपदे पूर्वसूत्रे निवारिता ये दोषास्तान् लगति प्राप्नोति।"——बृहत्कल्पभाष्यटीका पृ० ३१५ ।।

अपरिग्रह एव भवेद् वस्त्राभरणाद्यलङ्कृतोऽपि पुमान् ।
ममकारविरहितः, सति ममकारे सङ्गवान् नग्नः ।। १३ ।।
आचार्याद्यासक्तं स्वयमादित नो मुमुक्षुका लोभात् ।
उपसर्गाद्यासक्तमिवाम्बरमपरिग्रहस्तस्याः ।। १४ ।।
काये ममकारेऽपि च सपरिग्रह एव नैव मुक्तः स्यात् ।
तत्र यथा संलग्ने नो ममकारस्तथा वस्त्रे ।। १५ ।।
ग्रामं गेहं च विशन् कर्म च नोकर्म चाददानोऽपि ।
अपरिग्रहो[ऽ]ममत्वोऽपरिग्रहो नान्यथा कश्चित् ।। १६ ।।

इति सङ्गहार्याः ।

एवमपि वस्त्रवत्या वस्त्रे जन्तूत्पत्तेः शयनादिषु हिंसाऽवश्यम्भाविनी । तत्र प्रथमव्रतमेव तावदहिंसालक्षणं नास्ति, कथं मुक्तिरि[10a]ति चेत्,

संसक्तौ सत्यामपि चोदितयत्नेन परिहरन्त्यार्या ।
हिंसावती पुमानिव न जन्तुमालाकुले लोके ।। १७ ।।

नायं नियमोऽवश्यं चेलग्रहणमात्रेण संसक्तिर्भवतीति । अन्तर्मुहूर्तसिद्धा अनन्ता इति श्रूयन्ते । न च संसक्त्यां सत्यामपि तदैव तत्र जन्तुमरणम् । मरणेऽपि यथा शरीरादौ न प्राणव्यपरोपणं भवति तथा चेलेऽपि स्यात् । न च सत्यपि व्यपरोपणेऽर्हदुक्तेन यत्नेन परिहरन्त्याः प्रमादाभावे हिंसा भवति । प्रमादो हि हिंसा नाम । तथा च पठन्ति — प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा [तत्वार्थ. ७।८] इति । अन्यथा पिण्डोपधिशय्यासु स्थान-शयन-गमना-ऽऽकुञ्चन-प्रसारणा-ऽऽमर्शनादिषु च शरीरं क्षेत्रं लोकं च परिभुञ्जानो

[1]जले जन्तुः स्थले जन्तुराकाशे जन्तुरेव च ।
जन्तुमालाकुले लोके कथं भिक्षुरहिंसकः ।।

[10b]हिंसकत्वेऽपि अर्हदुक्तयत्नयोगे न बन्धः । तद्विरहे एव [2]यत्नः । तथा च पठन्ति —

[3]जियउ व मरउ य जीवो अजयाचारस्स निच्छओ बंधो ।
पययस्स नत्थि बंधो हिंसामित्तेण दोसेण ।।

---

१. तत्त्वार्थराजवार्तिके [पृ० ५४१] उद्धृतोऽयं श्लोकः ।।

२. 'बन्धः' इति पाठः साधुर्भवेत् ।।

३. "मरदु व जियदु व जीवो अयदाचारस्स णिच्छिदा हिंसा । पयदस्स णत्थि बंधो हिंसामित्तेण समिदस्स ।।३।१७ ।।" इति कुन्दकुन्दाचार्यविरचिते प्रवचनसारे दृश्यते ।

"अथान्तरङ्ग-बहिरङ्गत्वेन छेदस्य द्वैविध्यमुपदिशति —
मरदु व जियदु व जीवो अयदाचारस्स णिच्छिदा हिंसा ।
पयदस्स णत्थि बंधो हिंसामित्तेण समिदस्स ।।३।१७।।

अजयं चरमाणस्स पाणभूयाणि हिंसओ।
वज्झए पावए कम्मे से होंति कडुगे फले ।।
जयं तु चरमाणस्स दयाविक्खिस्स भिक्खुणो ।
नवे न वज्झए कम्मे पोराणे य विधूयए।। [ ] इति ।

तस्माद् यथा त्रैलोक्ये म्रियमाणेषूत्पद्यमानेषु च प्राणिषु पुरुषस्य न दोषसम्बन्धः तद्व-दस्या अपि ममत्वरहिताया यत्नवत्याः ।

चेलसंसर्गेऽपि मोक्षे गृहिणो मोक्षः कस्मा[11a]न्न भवतीति चेत्,

**[1]गृहिणो ममत्वयोगात् संयमसाधनगृहीत्यभावाच्च ।**
**अयतं चरतश्चरणं न विद्यते तेन नो मोक्षः ।। १८ ।।**

यथाऽऽर्याया वृत्तं न तथा गृहिणोऽस्ति । न हि गृही तत्र ममत्वरहितः, न च संयम-साधनार्थं वस्त्रं गृह्णाति, न च शास्त्रचोदितयत्नयोगी मिथ्यादर्शनादियोगादिति न तस्य मोक्षः । यद्यार्यिकावद् यत्नवान्, यतिरेव स्यात्, न गृही । तथा च पठन्ति –

हिरिमाणे एगेण वत्थेण परिव्वएज्जा [ ] इत्यादि ।

तथा

**[2]त्रिस्थानोक्ता दोषाः [3]त्रयोपदेशाय ते सचेलत्वे ।**
**अपरिषहसहिष्णुत्वं ह्रीश्च जुगुप्सा च देहस्य ।। १९ ।।** इति ।

---

[म्रियतां वा जीवतु वा जीवोऽयताचारस्य निश्चिता हिंसा।
प्रयतस्य नास्ति वन्धो हिंसामात्रेण समितस्य।।३।१७।। इति छाया]

अशुद्धोपयोगोऽन्तरङ्गच्छेदः, परप्राणव्यपरोपो वहिरङ्गः। तत्र परप्राणव्यपरोपसद्भावे तदसद्भावे वा तदविनाभाविप्रयताचारेण प्रसिध्यदशुद्धोपयोगसद्भावस्य सुनिश्चितहिंसाभावप्रसिद्धेः तथा तद्विनाभाविना प्रयताचारेण प्रसिध्यदशुद्धोपयोगासद्भावपरस्य परप्राणव्यपरोपसद्भावेऽपि वन्धाप्रसिद्धया सुनिश्चितहिंसाऽभावप्रसिद्धेश्चान्तरङ्ग एव छेदो वलीयान्, न पुनर्वहिरङ्गः। एव-मप्यन्तरङ्गच्छेदायतनमात्रत्वाद् वहिरङ्गच्छेदोऽभ्यु[प]गम्येतैव।" इति **प्रवचनसारस्य अमृतचन्द्रसूरिकृतायां तत्त्वदीपिकाभिधायां** वृत्तौ पृ० २९१–२९२ ।।

१. इयं कारिका N. P. प्रत्योर्नास्ति ।।

२. इयं कारिका N. P. प्रत्योर्नास्ति। अतो ग्रन्थकारेण मूलरूपेणेयं कारिका विवक्षिता आहोस्वित् पूर्वं "तथा च पठन्ति" इत्युल्लिख्य ग्रन्थान्तरादियमुद्धृता इति सन्दिग्धमत्र। किञ्च, अस्याः कापि व्याख्या ग्रन्थकृता न विहिता, अतोऽपि अस्या मूलत्वे सन्देहः।

३. 'ज्ञानदर्शनचारित्ररूपत्रयोपदेशाय, ते दोषाः' इति S. प्रतौ टिप्पण्यां लिखितमस्ति। '**त्रयोऽपदेशा यतेः सचेलत्वे**' इति पाठोऽत्र साधुरिति त्वस्माकं मतिः। अपदेशाः प्रत्यया इत्यर्थः। एते च त्रयः प्रत्ययाः स्थानाङ्गे इत्थं निर्दिष्टाः—

"तिहिं ठाणेहिं वत्थं धरेज्जा, तं० हिरिपत्तितं दुगुंछापत्तियं परीसहवत्तियं [सू. ३।३।१७१]। व्याख्या — वस्त्रग्रहणकारणा-न्याह — तिहीत्यादि। ह्री लज्जा संयमो वा प्रत्ययो निमित्तं यस्य धारणस्य तत् तथा, जुगुप्सा प्रवचनखिंसा विकृताङ्गदर्शनेन मा भूदित्येवं प्रत्ययो यत्र तत् तथा, एवं परीषहाः शीतोष्णदंशमशकादयः प्रत्ययो यत्र तत् तथा, आह च — "वेउव्वि वाउडे वाइए य हीरिखद्धपजणणे चेव। एसिं अणुग्गहट्ठा लिंगुदयट्ठा य पट्टो उ"।। [ओघनि० ७२३] तथा "तणगहणानलसेवानिवा-रणा धम्मसुक्कझाणट्ठा। दिट्ठं कप्पग्गहणं गिलाणमरणट्ठया चेव।।" [ओघनि० ७०७] इति।"—इति सटीके **स्थानाङ्गसूत्रे** तृतीये स्थाने तृतीय उद्देशे पृ० १३७।।

यदि वस्त्रोपा[11b]दानेऽपि मुक्तिः, किं पुरुषाणामाचेलक्यमुपदिश्यते ?

आचेलक्कुद्देसिय सिज्जायर रायपिंड किइकम्मे। [मूलाचारे गा० ९०९]
आचेलक्कं लोचो वोसट्ठसरीरया य पडिलिहणं।
एसो खु लिंगकप्पो चउव्विहो होइ उस्सग्गे।। [मूलाचारे गा० ९०८]
नो कप्पइ निग्गंथाणं चेलं वा चिलिमिलिं वा धारित्तए वा पडिग्गाहित्तए वा [ ] इति ।

यथैव स्त्रीणां सत्यपि वस्त्रे मुक्तिरेवं पुरुषाणामपि स्यात् । अथ तेषां पुरुषाणां सति वस्त्रे न मुक्तिः स्त्रीणामपि मा भूत्, को वा विशेषो येन स्त्रीणां वस्त्रमुपदिष्टं पुरुषाणां प्रतिषिद्धमिति चेत्, उच्यते –

**वस्त्रं विना न चरणं स्त्रीणामित्यर्हतौच्यत, विनापि ।**
**पुंसामि[12a]ति न्यवार्यत,**

भगवता स्त्रीणां वस्त्रमुपदिष्टं वस्त्रत्यागो निषिद्धः, पुरुषाणां च येषां विना वस्त्रेण शक्यं धर्मानुष्ठानं त्रिस्थानदोषरहितानां तेषां वस्त्रादानं प्रतिषिद्धं त्रिस्थानपतितानां चोपदिष्टम् । तन्नूनं तेषां धर्मसाधनं येषां भगवता तदुपदिष्टम् । न ह्यन्यथा निष्प्रयोजनं धर्मविरोधं वा भगवानुपादेयमुपदेष्टुमर्हति आप्तत्वविरोधात् । तेषां च निष्प्रयोजनं धर्मान्तरायो वा येषां प्रतिषिद्धम्, न हि धर्मसाधनं भगवान् निषेद्धुमर्हति । न चैकस्य धर्मसाधनं सर्वेषां भवति एकस्याऽभवद्वा सर्वेषां न भवतीति नियमः, अनशनादिषु तथा[ऽ]दर्शनात् ।

[12b]कथं कारणभेदे मुक्तिलक्षणं कार्यमभिन्नं स्यात् ? अयमेव हि भेदो भेदहेतुश्च यदुत विरुद्धधर्माध्यासः कारणभेदश्च चेत्,

**तत्र स्थविरादिवन्मुक्तिः ।। २० ।।**

तत्रैवं सचेलताचेलक्यभेदेऽपि मिथ्यात्वा-ऽसंयम-प्रमाद-कषाय-योगप्रतिबन्धिनः सम्यग्दर्शनादिरूपस्य मार्गस्य तत्प्रवृत्तिसाध्यस्य तुल्यत्वाद् मुक्तिस्तुल्यैव भवति, यथा स्थविरकल्पिनां सापेक्षसंयतानां जिनकल्पिनां च निरपेक्षसंयतानां भक्तपरिज्ञेङ्गिनीप्रायोपगमनगतानां षष्ठाऽष्टम-दशम-द्वादश-रत्नावल्याद्युपवासादिनिरतानां तद्विकलानां चेति ।

यदि चा[13a]यं निर्वन्धो 'वस्त्रग्रहणे न मोक्ष एव' इति,
**अर्शोभगन्दरादिषु गृहीतचीरो यतिर्न मुच्येत ।**

अर्शो-भगन्दरादि[1]गलत्पूयेषु व्याधिषु व्रणबन्धाय यतेश्चीरग्रहणमुपदिश्यते, अन्यथा तत्रासंयमः स्यात् । ततश्च तत्र गृहीतचीरः पुरुषोऽपि संयतो न संसारबन्धनाद् मुच्येत । निर्वेदाच्चात्यन्त-

---

१. रादि[ पु ?]।।

प्रवृद्धसंवेगो विशुद्धिस्थानानि उत्तरोत्तराणि उपगम्य स सेद्धुमर्हति, न हि तच्चीरं तच्चित्त-विशुद्धिं प्रतिबध्नाति । तथा

**उपसर्गे वा चीरे,**

उपसर्गेण **मृगध्वजादाविव** कस्मिंश्चित् समाहिते यतावासञ्जिते चीरे मुक्तिर्न प्राप्नोति ।

अथोच्येत – त[13b]त्र भवति मुक्तिः, न हि तच्चीरं स्वयं तेन परिगृहीतम्, अन्येन हि बलादङ्गे संयोजितम्, न चाङ्गसङ्गमात्रं परिग्रहः, अपि तु मूर्च्छा परिग्रह इति । यद्येवम्, आर्यापि सर्वसङ्गपरित्यागेन संविग्ना मुक्त्यर्थमुत्थिता गुरुषु निक्षिप्तात्मा तदादेशमाचरन्ती न मोक्षं परित्यज्य स्वयं मूर्छिता वस्त्रं ग्रहीतुमर्हति, अपि तु अर्हदादेशो वस्त्रग्रहणमिति न परिग्रहः ।

किञ्च,

**अङ्गादिः संन्यस्यते चान्ते ।। २१ ।।**

**मारणान्तिकीं संलेखनां योषिता** [तत्त्वार्थ ७।१७] इति मरणान्ते शरीरमादिं कृत्वा सर्व एव संयोगास्त्यज्यन्ते, तत्र कुतो वस्त्रं प्रच्छन्नप्रदेशगताया वस्त्रेणाङ्गसङ्गेऽपि मोक्ष[14a]प्रतिबन्धिनि मोक्षकामायाः? सोऽपि परिहर्तुं शक्यत इति ।

न च वस्त्रात् स्त्रीनिर्वाणाभावः । अथोच्येत –

**मुक्त्यङ्गमचेलत्वं नोच्येत तदन्यथा नरस्यापि ।**

**आचेलक्यायोग्या[ऽ]योग्या सिद्धेरदीक्ष्य[1] इव ।। २२ ।।**

आचेलक्यं मुक्तेः कारणम्, मुक्त्यर्थिनां कर्तव्यतयोपदिश्यमानत्वात्, मिथ्यादर्शनादि-त्यागवत् । अन्यथा पुरुषाणामपि तद् नोपदिश्येत, मुक्त्यर्थिनां मुक्तेरप्रयोजकत्वात्, सम्यग्दर्शना-दित्यागवत् । तस्य च मुक्त्यङ्गस्याऽऽचेलक्यस्यायोग्या स्त्री, तस्या [आ]चेलक्यनिषेधात् । अतश्च मोक्षकारणायोग्यायाः स्त्रियोऽदीक्षार्हस्य बालादेरिव मोक्षाभाव इति ।

**इति जिनकल्पादीनां मुक्त्यङ्गानामयोग्य इति सिद्धेः ।**

**स्यादष्टवर्षजातादिरयोग्योऽदीक्षणीय इति ।। २३ ।।**

एवं ब्रुवतस्तेऽतिप्रसङ्गः, जिनकल्पादिष्वप्यस्य न्यायस्य तुल्यत्वात् । तथाहि – जिनकल्पो यथालन्दविधिः परिहार इति मुक्त्यङ्गम्, मुक्त्यर्थिनः कर्तव्यतयोपदेशात्, सम्यग्दर्शनादिवत् । अन्यथा मुक्त्यर्थिनस्तन्न कस्यचिदप्यादिश्येत, मुक्तेरप्रयोजकत्वात्, सम्यग्दर्शनादित्यागवत् । तस्यैवं मुक्त्यङ्गस्य जिनकल्पादेरयोग्यो यस्याष्टौ वर्षाणि जातस्य तदादिः,

---

१. दीक्ष इव N. S. ॥

जम्मेण तीसवरिसो परियाए गूणवीसवरिसो उ ।
परिहारं पट्ठविउ अरिहइ मणुसो उ एरिसओ ॥ [ ]

इति वचनात् । ततश्च मोक्षकारणा[15a]योग्यस्य त्रिशद्वर्षजातादेरधस्तनस्यादीक्षणीयस्येव मोक्षाभाव इति समानो न्यायः । न चैवं मोक्षाभावः, अष्टवर्षजातस्यापि मोक्षाभ्युपगमात् । तस्मादन्यायोऽयम् । यथा चात्र नियमो नास्ति 'निरपेक्षसंयतानामेव जिनकल्पादीनां मोक्षो न सापेक्षसंयतानां स्थविराणाम्, स्थविरकल्पानामेव च न जिनकल्पादीनाम्' इति तथा सचेलानामपि यथासूत्रमाचरतामिति । यदि सचेलानामचेलानां च सापेक्षसंयतानां निरपेक्षसंयतानां चोभयेषां मुक्तिः किं दुष्करचर्या शास्त्रे उपदिश्यते ? न हि सुखसाध्येऽर्थे दुःखोपदेशो युक्त इति चेत्, उच्यते –

**संवर[15b]निर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे ।**
**योगचिकित्साविधिरिव कस्यापि कथञ्चिदुपकारी ॥ २४ ॥**

यथा द्रव्य-क्षेत्र-काल-भावाश्रयो द्रव्यादीनामनेकरूपत्वाद् आरोग्यरूपे एकस्मिन्नपि कार्ये विविधदोष[1]रोगावस्थाविषयोऽनेकोपयोगकालप्रकारोऽनेको योग उक्तश्चिकित्साशास्त्रे कस्यचिदातुरस्य कश्चित् कथञ्चिदुपकारी भवतीति तथाऽध्यात्मशास्त्रेऽपि विविधशक्तिकर्मापेक्षस्तपोविधिरनेकः सर्वोऽपि सञ्चितकर्मनिर्जरा-ऽऽगामिककर्मनिरोधलक्षण उक्तः ।

एवं स्त्रीनिर्वाणप्रतिषेधसाधनाभावं प्रतिपाद्ये[16a]दानीं केन स्त्रीनिर्वाणाभाव इत्याह –

**वस्त्रान्न मुक्तिविरहो भवतीत्युक्तं समग्रमन्यच्च ।**
**रत्नत्रयान्न चान्यद् मुक्त्यङ्गं शिष्यते सद्भिः ॥ २५ ॥**

'वस्त्रं नाम परिग्रहः, तद्योगादस्याः संयमस्थानमेव नास्ति, कुतो मोक्षः ?' इत्येतावन्निराकृतम् । इदानीं यदन्यत् पुरुषेषु मुक्तिसाधनतयाऽङ्गीक्रियते तत् सर्वं स्त्रीष्वप्यविकलम् । तद्धि रत्नत्रयम् । न च तस्य वैकल्यं तत्रोपलभ्यते । न च तस्मादन्यत् [2]पौंस्नमन्यद्वा मुक्तेः कारणम् । मुक्तेर्हि कारणमार्या रत्नत्रयमेवाहुः–

सम्यग्दर्शन-ज्ञान-चारित्राणि मोक्षमार्गः [तत्त्वार्थ० १।१] इति ।

ज्ञानं सुमार्गदीपं सम्यक्त्वं तदपराङ्मुखत्वाय ।
चारित्रमाश्रवघ्नं क्षपयति कर्माणि तु तपोऽ[16b]ग्निः ॥
नाणं पयासयं सोहओ तवो संयमो य गुत्तिकरो ।
तिण्हंपि समायोगे मोक्खो जिणसासणे दिट्ठो ॥ [आव० नि० १०३]

इति [3]तदक्षतम् ।

---

१. ०परागा० S.॥ २. पौस्तम० S.॥ ३. तदन्त्यतं S.। (तदन्यूनम् ?) ॥

यद्येतावता मुक्तिः किं केषाञ्चित् स्तेन-राजापकारि-द्व्यक्षरादीनां तद्योगे प्रव्राजना निषिद्धा ? यान्तु ते मोक्षिकीं दीक्षां प्रतिपद्य मोक्षम्, कस्तत्र भवतो मत्सरः ? इति । अतो रत्नत्रयादन्येनापि मुक्त्यङ्गेन भवितव्यं यदभावात् प्रतिषिद्धदीक्षाः सत्यामपि दीक्षायां न मुच्यन्त इति चेत्, उच्यते –

**प्रव्राजना निषिद्धा क्वचित्तु रत्नत्रयस्य योगेऽपि ।**
**धर्मस्य हानि-वृद्धी निरूपयद्भिर्विवृद्ध्यर्थम् ।। २६ ।।**

स्तेन-राजापकार्यादीनां केषाञ्चित् प्रव्राजनायां तेषां प्रव्रजितानां प्रव्राजयितुः सङ्घस्य च[17a[ प्रत्यपायः स्यात् । द्व्यक्षर-भृतकादीनां प्रव्राजने धर्मस्य महाजनमध्ये लाघवं सर्व एवैते एतादृशा इति । ततश्च न कश्चित् कुलपुत्रो जुगुप्सया [1]धर्मं प्रतिपद्येत इति धर्मस्य हानिः, तत्परिहारे तु वृद्धिरिति धर्मस्य हानि-वृद्धी निरूपयद्भिर्भगवद्भिस्तेषां प्रव्राजना निषिद्धा । न तु रत्नत्रयादन्यत् तत्र पौरुषेयं मोक्षकारणमस्ति । यदि च स्यात् तदपि तत्रैव मा भूद् यत्र प्रतिषेधः, नान्यत्र, अतिप्रसङ्गात् ।

**अप्रतिवन्द्यत्वाच्चेत् संयतवर्गेण नार्यिकासिद्धिः ।**

अथैवं मन्येत – यदि [2]पुरुषा[:] स्त्रियोऽपि संयता मुक्तिभाजः उभये[17b]ऽपि गुणेन सदृशा भवन्ति ततः किं स्त्रियः शतवर्षप्रव्रजिता अप्यद्यप्रव्रजितस्य साधोर्वन्दिका भवन्ति प्रतिवन्दनं च न लभन्ते ? ततो मन्यामहे – न तासां मोक्ष इति ।

**वन्द्यन्तां ता [[3]यदि तेनोनत्वं कल्प्यते तासाम् ।। २७ ।।]**

यदि सम्पन्नेऽपि रत्नत्रये वन्दनाभावान्न स्त्रीणां निर्वाणं वन्दनमप्येवं सम्यग्दर्शनादिवद् मुक्त्यङ्गं वन्द्यन्तां ता भवद्भिरेवंवादिभिरार्यिकाः । न हि तासां तावता वन्दनाभावमात्रेणात्र-भवद्भिर्मोक्षं विनाशयितुं युक्तम् । न च भवतां तावता काचित् क्षतिः । वयं पुनः संयतवर्ग-वन्दनेनैव कर्मनिर्जराकारिणा तासां मोक्षः, न प्रतिवन्द्यत्वेन । न ह्यन्यथा भगवानेवं व्यवस्थां [4]कर्तु

........................................................................................

**[[5]सन्त्यूनाः पुरुषेभ्यस्ताः स्मारणवारणादिकारिभ्यः ।**
**तीर्थकराकारिभ्यो न तावताऽसिद्धिरङ्गगतेः ।। २८ ।।**
**अर्हन् न वन्दते न च जिनकल्पादिरिति गणधरादीनाम् ।**
**प्राप्ताऽन्यथाऽविमुक्तिः]**

........................................................................................

१. धर्मे S.।। २. (पुरुषा इव ?)।। ३. अंशोऽयं N. P. मूलादर्शानुसारेण परिपूरितः।।
४. इतः परम् अष्टादशं संपूर्णमपि पत्रं S. प्रतौ न विद्यते।।
५. कारिकात्मकोऽयमंशः N. P. प्रती अवलम्ब्य पूरितः।।

......[18a]तिवन्द्यन्त इति स्त्रीणां निर्वाणम् । अर्हन्तं गणधरादयो वन्दन्ते, न तानर्हन्, न हि तीर्थकरा गार्हस्थ्येऽपि सिद्धव्यतिरेकेणान्यान् वन्दन्ते, 'नमः सिद्धेभ्यः' इत्युक्त्वा श्रामण्यं प्रतिपद्यन्ते । तथा जिनकल्प-प्रतिमाप्रतिपन्नादयोऽपि वन्द्यन्ते न वन्दन्त इति गणधरादीनां स्थविरकल्पस्थादीनां च मुक्त्यभावप्रसङ्गः, अर्हदादीनामेव मुक्तिः स्यात् ।

अथैवं मन्येत – अर्हन्निति महत् स्थानं न्यूनं गणधरा इति । तथा जिनकल्प[:] स्थविरकल्पश्च[1]......स्तस्मादर्हदादयो न वन्दन्त इति । एवं तर्हि वन्द्यानां मुक्तिभाव[2](वेऽ)प्रतिवन्द्याना-मिति हीनम् ।

किञ्च,

**स्थानं स्त्रीपुंसयोस्तुल्यम् ।। २९ ।।**

स्त्रीपुंसयोरप्येतच्छक्यते वक्तुम् – पुरु[18b]ष इति महत् स्थानं स्त्रीति न्यूनमिति । तच्चोक्तम् –

[3]सारण-वारण-परिचोयणाइ पुरिसो करेइ [ ] ।

**ये यान्न मुक्तिभाजो वन्दन्ते ते तथैव मुच्यन्ते ।**
**इत्यप्यवन्दनं स्यान्नामोक्षोऽवन्दनात् तेन ।। ३० ।।**

इति सङ्ग्रहार्या ।

**अपकृष्यते श्रिया स्त्री पुंसः सर्वत्र किं न तद् मुक्तौ ।**
**इत्यमुनाऽक्षेपि,**

यदप्युच्यते कैश्चिद् बालैः – स्वर्गे या महतीन्द्रश्रीः इह च चक्रधर-बलदेव-वासुदेव-प्रभृतिमण्डलीकमहामण्डलीकलक्ष्मीः प्रतिगृहं च नायकत्वं पुरुषाणामेव न स्त्रीणामस्ति, एवमिह श्रिया स्त्री पुरुषादपकृष्यमाणा दृश्यते सा मुक्तिश्रियाप्येवं ततः किं नापकृष्यते? तत्राप्यपकर्ष एवास्या युक्तः, तथा दर्शनात् । ततश्च न स्त्रीनिर्वा[19a]णमिति । एतदपि गणधरादिमोक्षेणैव प्रतिक्षिप्तम् । यदि महत्याः श्रियोऽनर्हस्याऽमुक्तिः महत्यास्तीर्थकरलक्ष्म्या गणधरादयश्चक्र-धरादिलक्ष्म्याश्च ब्राह्मणा वैश्याश्चानर्हाः[4], क्षत्रिया एव च ते ।

नरदेव-राम-केसव-जिण-निव्वुइ-विरइ-देस-सम्मत्तं ।
रयणप्पभाइसत्तहिमायातोऽणंतरेण लभे ।। [ ]

---

१. इतः परं पाठपूर्तिनिर्देशकम् Λ इदृशं चिह्नं S. प्रतौ विद्यते, किन्तु पाठः क्वचनापि सम्पूरितो न विलोक्यते । अतः कश्चिदंशोऽत्र न्यूनः स्यात् ।। २. (मुक्तिभावः?) ।।

३. "नारण-वारण-पडिचोयणाइ पुरिसा करेइ ण हु इत्थी" इति सम्पूर्ण गाथार्धमुद्धृतं न्यायकुमुदचन्द्रे पृ० ८७६ ।।

४. ०श्चानर्हाक्षत्रिया S. ।।

इति पङ्कप्रभाया अपि पृथिव्या आगतानां मुक्तिः पठ्यते न तीर्थकराद्यर्हतेति[1] तेषां मुक्त्यभावप्रसङ्गः । यथा च तेषां गणधरादीनां तत्तल्लक्ष्मीमनर्हतामपि मुक्तिस्तथा स्त्रीणामपि स्यात् । न हि तल्लक्ष्मीयोग्यता मुक्तेर्मार्गः, अपि तु सम्यग्दर्शन-ज्ञान-चारित्राणि । [19b]तानि चेत् समग्राणि, किमन्येन? भवति मुक्तिः । न ह्यविकलकारणं कार्यमभवदास्ते । तानि चेद् विकलानि तदेव वैकल्यं वक्तव्यम्, किमन्येनाप्रयोजकेन कथितेन ?

किञ्च,

**अस्त्रीपुंसाः सिद्धाः ।**

स्त्री श्रिया पुरुषादपकृष्यते इति च स्त्रीपुरुषावस्थायाम्, न तु गत्यन्तरे तद्रूपत्यागे । सिद्धावस्थायां च न स्त्रीपुरुषा(ष)भाव इति न किञ्चिदेतत् ।

किञ्च,

**समरुक्त्वम् ।। ३१ ।।**

मुक्तिश्रीर्नाम सकलसंसारज्वरमोक्षः आत्यन्तिकमारोग्यम्, न तु [2]दानाक्षेपादिसमन्वितः पुण्यकर्मविपाको बहिर्विभवः । तद्यथेह ज्वरादिविगमरूपमारोग्यं स्त्रीणां पुरुषाणां च समानं तथा मुक्तावपि भवितुमर्हति [20a]कारणसम्पदस्तुल्यत्वात् ।

मायाचापलादिबहुलाः स्त्रियो भवन्ति, तन्न तस्या निर्वाणमिति चेत्,

**मायादिः पुरुषाणामपि देशादिप्रसिद्ध्यभावश्च ।**
**षण्णां संस्थानानां तुल्यो वर्णत्रयस्यापि ।। ३२ ।।**

मायादिः पुरुषाणामपि, मोहोदयस्य स्त्रीपुरुषयोरविशेषात् । यथा पुरुषाणां [3]मोहशाततः सर्वदोषप्रतिकूलः प्रतिसंख्यानरूपो मार्गस्तथा स्त्रीणामपि । तन्न ततो निर्वाणाभावः । अन्यथा पुरुषाणामपि मा भूत्, तेषामपि मायाद्युपपत्तेः । ननु च यदि स्त्रीणामस्ति निर्वाणं तन्निर्वाण-ज्ञानोत्पत्तिविहरणभूमयः कालाश्च किं न प्रसिद्धाः यथा पुरु[20b]षाणां चम्पा-सम्मेतो-ज्जयन्त-वाड-राजगृहप्रभृतयो भूमयः स्वात्यादयश्च कालाः ? ततो न स्त्रीनिर्वाणमिति । देशादिप्रसिद्धे-रतत्कारणव्यापकत्वान्न तन्निवृत्त्या निर्वाणनिवृत्तिः कर्तृस्मरणनिवृत्त्या पौरुषेयत्वनिवृत्तिवदिति प्रतिक्षिप्तम् । प्रसिद्धाश्च रामकल्पा(ल्या ?)दीनाम् । अस्माकं स्त्रीनिर्वाणमनभ्युपगच्छताम-प्रसिद्धा इति चेत्, मीमांसक-लोकायतिकादीनां पुरुषनिर्वाणादिप्रदेशा अप्यप्रसिद्धाः । तन्न तत्प्रसिद्ध्यभावस्तदभावे प्रमाणम् ।

---

१. द्यर्हत्तेति० S. ।। २. (हाना० ?) ।। ३. मोहसाततः S । (मोहसातनः ?) ।।

किञ्च, देशादिप्रसिद्धचभावश्च षण्णां संस्थानानां तुल्यो वर्णत्रयस्यापि । न हि निर्वाणजुषां सर्वेषामपि तेषां भूम्यादयः प्रसिद्धा एव[21a] भवन्ति, नियमहेत्वभावात् । यदि च तदभावादनिर्वाणमतिप्रसङ्गः । सन्ति हि भूयिष्ठा अप्रसिद्धनिर्वाणभूम्यादयः । न ह्यत्रात्र इमे इमे निर्वाणा इति षण्णामपि संस्थानानां त्रयाणामपि वर्णानां साकल्येन तद्देशादिप्रसिद्धिरस्ति । अथ तेषां तदभावेऽपि मुक्तिः, कस्तवार्यिकासु प्रद्वेपः? तस्मात् कारणसाकल्ये न कश्चित् कार्यं निषेद्धुमीश्वर इति स्त्रीनिर्वाणकारणवैकल्यमेव दर्शनीयम् । तच्चाशक्यम् ।

अथोच्यते –

**स्त्री नाम मन्दसत्त्वा मुक्त्यङ्गसमग्रता न तेनात्र ।**

स्त्रियो नाम मन्दसत्त्वा भवन्ति । न हि तासां पुरुषाणामिव सत्त्वाधिकतास्ति । मन्दसत्त्वानां च 'सर्वं सत्त्वे प्रतिष्ठितम्' [ ] इति कथं कातरदुर्विगाहं रत्नत्रयं समग्रतामनुभवेदिति ।

**तत् कथमनल्पवृतयः सन्ति हि शीलाम्बुनिधिवेलाः ॥ ३३ ॥**

इह हि सत्त्वं तपःशील[21b]धारण एषितव्यम्, नान्यदनङ्गत्वात् । तच्चानल्पधृतिबलमार्यासु सुदुर्धरतपःशीलवहासु दृश्यते । प्रसिद्धाश्च सत्त्वेनार्याः शासने श्रूयन्ते –

**ब्राह्मी सुन्दर्यार्या राजिमती चन्दना गणधरान्या[:] ।**
**अपि देवासुरमहिता विख्याताः शीलसत्त्वाभ्याम् ॥ ३४ ॥**

ब्राह्म्यादीनां भगवतीनामन्यासामपि सकलनरामरलोकमहितानामार्याणां सकलभुवनातिशायि शीलं तदनुमेयं च महत् सत्त्वं विख्यातम् ।

**गार्हस्थ्येऽपि सुसत्त्वा विख्याताः [1]शीलवतितमा जगति ।**
**[2]सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ॥ ३५ ॥**

लोकेऽपि [2]सीतादयो गृहस्थाश्रमेऽप्यभेद्यशीला महासत्त्वाः श्रूयन्ते । ता एव कथमशेषसंसारज्वरनिर्वहणीं परित्यक्तसर्वभोगां भागवतीं दीक्षां महापुरुषानुत्ती(ची)र्णां सत्त्वविवर्धिनीमुपादाय विसत्त्वाः [22a]विशीलाश्च भवेयुः? किञ्च,

**सन्त्यज्य राज्यलक्ष्मीं पतिपुत्रभ्रातृ[बन्धु]सम्बन्धम् ।**
**पारिव्राज्यवहायाः किमसत्त्वं सत्यभामादेः ॥ ३६ ॥**

नारायणभार्याणां प्रसिद्धपरित्यागमहिमानां निर्वू(र्व्यू)ढसंयमभराणामशक्तिकल्पनां प्रति कथमप्यविषयाणामुदाहरणेन स्त्रीणामसत्त्वकल्पना प्रतिक्षिप्यते ।

---

१. योगशास्त्रस्वोपज्ञवृत्तौ [ ३–१२० पृ० २०७ B ] न्यायावतारवार्तिकवृत्तौ [ पृ० १२१ ] चोद्धृतेयं कारिका। न्यायकुमुदचन्द्रेऽपि उद्धृता, तत्र च 'शीलवत्तया' इति पाठः पृ० ८६९॥

२. शीता S॥

**महता पापेन स्त्री मिथ्यात्वसहायकेन न सुदृष्टिः ।**
**स्त्रीत्वं चिनोति, तन्न तदङ्गे क्षपणेति निर्मानम् ।। ३७ ।।**

स्त्रीत्वनिर्वर्तनं कर्म महत् पापम् । तथाहि—यद्यपि सास्वादनसम्यग्दृष्टिरपि तदर्जयति, सम्यग्दर्शनमवसादयन् मिथ्यादृष्टिरेवेति मिथ्यादर्शनाभिमुखो मिथ्यादर्शनेनैव व्यपदिश्यते, न सम्यग्दर्शने[23b]न । सम्यग्मिथ्यादृष्टयोऽपि तावत् तन्नार्जयन्ति, किमङ्ग सम्यग्दृष्टयः । स्त्रीत्वेनोत्पद्यमानोऽपि मिथ्यात्वपरिणत एवोत्पद्यते जीवः ।

मणुसीसु तिरिक्खीसु य वंसाइखिईसु जोइसंतीसु ।
इत्थीसु य पडिसिद्धो सम्मद्दिट्ठीण उववाओ ।। [ ]

इति वचनात् । तदेवं महापापनिष्पन्ने स्त्रीशरीरे नारकादिशरीरवद् न कर्मणां क्षपणा सम्भाव्यत इति चेत्, तदेतद् निष्प्रमाणकम्, न हि 'अत्र स्त्रीशरीरे क्षपणा न' इत्यत्र प्रमाणमस्ति, स्त्रीत्वेन तुल्ययोगक्षेमेषु संस्थानादिषु क्षपणाभ्युपगमात् । न हि [1]स्त्रीशरीरादन्यत् शरीरं समचतुरस्रसंस्थानाद्वान्यत् संस्थानमिति प्रकर्षपर्यन्तप्राप्तं रत्नत्रयम[24a]शेषकर्मनिर्मूलनैकव्यापारं कर्मराशावग्निवत् तृणराशावुदास्ते । तथाहि—

**अन्तःकोटीकोटीस्थितिकानि भवन्ति सर्वकर्माणि ।**
**सम्यक्त्वलाभ एवाशेषाघक्षयकरो मार्गः ।। ३८ ।।**

यदैव जीवः प्रवृद्धविशोधिपरिणामः सम्यग्दर्शनोन्मुखो भवति नाद्यापि सम्यग्दर्शनं प्रतिपन्नस्तदैव सप्ततिसागरोपमकोटीकोटीस्थितिकान्यपि कर्माण्यन्तःसागरोपमकोटीकोटीस्थितिकानि भवन्ति । यदा त्वशेषकर्मद्रुमनिर्दहनो मार्गः स्वोदयनिरस्तमिथ्यात्वा-ऽसंयमकषायः सम्पन्नस्तदा किमत्र वाच्यमशेषकर्मक्षयो भवति । न हि सम्यग्दर्शनमनपास्यदेव मिथ्यादर्शनमुदेति ज्ञानं चाज्ञानं चारित्रं चाचारित्रं तां तामवस्थामापद्यमानमसंयम-कषाय-प्रमादयोगान् । न च निर्मूलित-[24b]मिथ्यात्वा-ऽसंयम-कषाय-प्रमादयोगस्य जन्मान्तरोपादानं सम्भाव्यते । तथा चाधीयते—

मिथ्यात्वा-ऽसंयम-कषाय-प्रमाद-योगा वन्धहेतवः [ [2]तत्त्वार्थ० ]
सम्यग्दर्शन-ज्ञान-चारित्राणि मोक्षमार्गः [तत्त्वार्थ० १/१] इति ।

---

१. 'स्त्रीशरीरादन्यत्' इति पाठः S प्रतौ चिह्नं कृत्वा केनचिल्लेखकेनाधस्तात् पूरितः । 'पुंशरीरादन्यत्' इति पाठस्त्वत्र संगतोऽस्माकं प्रतिभाति । अथवा 'न हि स्त्रीशरीरं समचतुरस्रसंस्थानाद्वान्यत् संस्थानमिति' इति पाठोऽत्र शोभनो भाति ।।

२. 'मिथ्यादर्शनाविरतिप्रमादकषाययोगा वन्धहेतवः' [८–१] इति तत्त्वार्थसूत्रे पाठः ।।

अन्योऽप्याह –

'दुःखे विपर्यासमतिस्तृष्णा चावन्ध्यकारणम्।
जन्मिनो यस्य ते न स्तो न स जन्माधिगच्छति ।। [प्रमाणवा० १/८३]
निरालोको लोको विषयसुखतृष्णाविलसितै-
भृतेच्छो दुर्वृत्त्या निरधिकृतबुद्धिस्तव मते।
अरण्यानीं मोहादुपसरति हा सद्भवमयीं
भवन्वा(न्तं?) त्रातारं शिवममृतयोनिं न लभते ।।

यदि रत्नत्रयं स्त्रीषु न सम्पद्येत तदेव वक्तव्यम्, किमन्येन ? इत्युक्तम् । तच्चाशक्यम्, तत्र प्रमाणाभावात् ।

ननु च मा भूत् स्त्रीणां निर्वाणाभावे प्रमाणम्, तदस्तित्वे किं प्रमाणम् ? न चेदानीमिहोपलभ्यमानमार्गोपलम्भादेव तन्निश्चयः, विप्रकृष्टावस्थानां कारणानां कार्ये व्यभिचारात्, अन्यथेदानीं सर्वेषां मुक्तिप्रसङ्गात् । यदवस्थानन्तरं मुक्तिः तत्र प्रकर्षपर्यन्तप्राप्तौ स्त्रीणां न वः किञ्चन प्रमाणमस्ति, परिणामशक्तीनां दुरवसानत्वादिति चेत्; एवं ब्रुवाणस्य पुंनिर्वाणेऽपि किं प्रमाणम् ? तत्रापि हि शक्यमेवं वक्तुम् । रत्नत्रयप्रकर्षपर्यन्तप्राप्तिसम्भावना च पुंवत् स्त्रीष्वपि स्यात् ।

किञ्च, अत्रागमः प्रमाणं यत्प्रसादादस्माकमयमवष्टम्भः, यतः पराङ्मुखो जन्तुर्जन्मजलधिमतिगाहते । कोऽसावागम इति चेत्,

**अष्टशतमेकसमये पुरुषाणामादिरागमः सिद्धौ ।**

**स्त्रीणाम्,**

अट्ठसयमेगसम[25b]ये पुरिसाणं निव्वुई समक्खाया।
थीलिंगेण य वीसं सेसा [2] दसगं ति बोद्धव्वा ।। [ ]

इत्यादिरागमः स्त्रीनिर्वाणे प्रमाणम् ।

अथोच्येत – सत्यम्, स्त्रीनिर्वाणाभिधाय्यागमो विद्यते, नास्माकमत्रापह्नवः, किन्तु स्त्रीशब्दस्य स्तन-प्रजनवर्त्मादिमती स्त्री नार्थः, अपितु पुरुषविशेष एव यत्र स्त्रीवेदोदयः, स्त्री-

---

१. बौद्धाचार्यधर्मकीर्तिविरचितस्य प्रमाणवार्तिकस्येयं कारिका।

"दुःखे विपर्यासमतिस्तृष्णा चावन्ध्यकारणम् आश्लेषहेतुर्जन्मिनः, तृष्णया आत्मस्नेहोऽप्याक्षिप्तो हेतुवद् वेदितव्यः। यस्य तून्मूलितात्मग्रहस्य ते विपर्यासस्तृष्णा च न स्तो न विद्येते न स जन्माधिगच्छति" इति मनोरथनन्दिविरचितायां प्रमाणवार्तिकवृत्तौ। प्रमाणवार्तिकपरिच्छेदानां क्रमद्वयं वर्तते। क्रमान्तरे द्वितीयपरिच्छेदे ८१ संख्याकोऽयं श्लोकः ।।

२. दसछत्ति S ।

न्यायकुमुदचन्द्रे [पृ० ८६९] उद्धृतेयं गाथा तत्र 'दसकत्ति' इति 'दसकंति' इति च पाठान्तरद्वयम्। न्यायावतारवार्तिकवृत्तावपि [पृ० १२१] उद्धृतेयं गाथा तत्र च 'दसगं तु' इति 'दसगं च' इति च पाठान्तरद्वयम्।

स्वभावे च पुरुषे स्त्रीशब्दो लोके प्रयुज्यते, तथा च पुरुषकारशून्यं क्लीबं दृष्ट्वा वक्तारो भवन्ति 'स्त्री अयम्, न पुरुषः' इति । तदयुक्तम्,

**न मुख्ययोगे गौणोऽर्थः**

पुरुषः स्त्रीशब्दस्य गौणोऽर्थः, स्त्र्येव मुख्यः, स्त्रियां च स्तन-प्रजनवर्त्मादिमत्यां[1] मुख्येऽर्थे निर्वाणाभावो न प्रतिपन्नः, त[26a]त्र 'गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न गौणोऽर्थो भवितुमर्हति,

**मुख्यहानं वा ॥ ३९ ॥**

न गौणपरिग्रहेऽपि गौणस्यैव परिग्रहेण मुख्ये बाधकाभावेन मुख्यस्यार्थस्य त्याग उपपद्यते । किं न मुख्ययोगे गौणोऽर्थ इति चेत्, उच्यते–

**शब्दनिवेशनमर्थः प्रत्यासत्त्या क्वचित् कयाचिदसः ।**
**तदयोगे योगे सति शब्दस्यान्यः कथं कल्प्यः ॥ ४० ॥**

यस्मिन्नर्थे यः शब्दोऽन्वय-व्यतिरेकाभ्यां वृद्धव्यवहारे वाचकत्वेन प्रथमनिविष्टो दृष्टो निवेशितो वा स तस्यार्थः, यथा गवादिशब्दानां सास्नादिमदादयः, अप्रतिपन्नसंबन्धस्यावाचकत्वात्, अन्यथा सर्वः सर्वस्य वाचकः स्या[26b]त् कस्यचित् प्रत्यासत्तिविप्रकर्षयोरभावात् । एष मुख्यो नामार्थः । अस्य शब्दात् प्रतिपत्तिर्न्याय्या, प्रतिपाद्यत्वेन शब्दं प्रति प्रतिपन्नसम्बन्धत्वात् । अस्यायोगे नास्य मुख्योऽर्थः संभवति, अर्थवता चानेन भवितव्यमप्रमत्तवचनत्वात्, दृष्टश्च लोके तथाविधे वचने साहचर्यादिप्रत्यासत्त्या कयाचिदसोऽप्यर्थ इत्यन्योऽप्रतिपन्नसम्बन्धोऽपि लोकदृष्टप्रत्यासत्त्यनतिक्रमेणार्थः कल्प्यते – गौर्वाहीकः, गङ्गायां घोषः, धनुःशतं धावति, दधित्रपुसं प्रत्यक्षो ज्वर इति । स सादृश्यादिनिबन्धनो गौणः । अयं मुख्यासंभवाभावे कल्पयितुं न शक्यते, मुख्यायोगे [27a]एव दृष्टत्वात् ।

किञ्च,

**अव्यभिचारी मुख्योऽविकलोऽसाधारणोऽन्तरङ्गश्च ।**
**विपरीतो गौणोऽर्थः सति मुख्ये धीः कथं गौणे ॥ ४१ ॥**

न हि मुख्यो गौः कदाचिदगौर्भविष्यति, सर्वदा गोत्वस्य शब्दप्रवृत्तिनिमित्तस्याव्यभिचारात् सदा गौरेवासौ । यदापि शब्दान्तराभिधेयतया व्यवह्रियते शुक्लः स्थूलो बलिष्ठतया हस्तीति वा तदापि गौः सन्नेव तथोच्यते, न हि तदा गौर्न भवतीति प्रत्ययः, तस्मान्मुख्यः शब्दस्याव्यभिचार्यर्थः, गौणः पुनर्व्यभिचारी । तथाहि – तत्र वस्तुतः स्वप्रवृत्तिनिमित्तविकलेऽर्थे वाहीकादौ

---

१. ०मत्या मुख्योऽर्थो S ॥

गोशब्दः प्रवर्तमानः तन्निमित्ताध्यारोपमपेक्षते, [1]स हि गोत्वैकार्थसमवायितिष्ठन्मूत्रण[27b]-गच्छन्भक्षणादिधर्मदर्शनाध्यारोपिततद्भावो गौर्भवति, नान्यदा । यदा च बलिष्ठतादिविवक्षया हस्तित्वाद्यध्यारोपः तदा हस्त्यन्य एवोच्येत 'हस्त्ययं वाहीकः' 'अश्वोऽयं वाहीकः', न तदासौ गौः, गोत्वाध्यारोपाभावात् । अविकलश्च मुख्योऽर्थः । न हि मुख्येऽर्थे शब्दप्रवृत्तिनिमित्तस्य वैकल्यमस्ति । गौणः पुनर्मुख्यार्थैकदेशानुगमादध्यारोपिततद्भावः शब्दप्रवृत्तिनिमित्तवैकल्याद् विकलोऽर्थः । असाधारणश्च मुख्योऽर्थः । न ह्यसौ मुख्यो[2] गौर्हस्त्यश्वो वा भवति, गौणः पुनर्वाहीको गौर्हस्त्यश्वश्च भवति । तस्मादसौ शब्दान्तरसाधारणो न तु मुख्यः । अन्तरङ्गश्च मुख्योऽर्थः, अर्थान्तरानपेक्षणात् । न हि तत्र गो[28a]शब्दः प्रवर्तमानोऽर्थान्तरमपेक्षते गौणस्तु मुख्यैक-देशदर्शनात् प्रवर्तमानो मुख्यमपेक्षते इति बहिरङ्गः । लोके च शब्दात् प्रतिपत्तिरव्यभिचारादि-प्रतिपत्त्यङ्गसमन्वित एवार्थे तत्सम्भवे दृश्यते । यथादर्शनं च शब्दादर्थप्रतिपत्तिरिति गौणमुख्ययो-र्मुख्ये सम्प्रत्ययः, तस्मान्न स्त्रीशब्दादिह सति मुख्ये स्तन-प्रजनवर्त्मादिमत्यर्थे पुंसि [3]श्मश्रु-मेहनादि-लक्षणेऽर्थे गौणे युक्तः ।

स्तन-प्रजनवर्त्मादिमान् मुख्योऽर्थः, न तत्स्वभावः पुमानिति कुतो ज्ञायत इति चेत्,

**स्तन-जघनादिव्यङ्ग्ये स्त्रीशब्दोऽर्थे न तं विहायैषः ।**

**दृष्टः क्वचित्**

स्तन-प्रजनवर्त्मादिव्यञ्जनेऽर्थे एष स्त्रीशब्दो लोके दृष्टप्रयोगः, न तद्वत् [3]श्मश्रु-मेहनादि-व्यञ्जनेऽर्थे । लोके च यानि येष्वर्थेषु प्रसिद्धानि पदानि तानि सति सम्भ[28b]वे तदर्थान्येवेह प्रतिपत्तव्यानि, अन्यथाऽतिप्रसङ्गात् ।

**अन्यत्र त्वग्निर्माणवकवद् गौणः ॥ ४२ ॥**

यश्च पुंसि पुरुषकारशून्ये 'स्त्री अयम्, न पुरुषः' इति प्रयोगः स तत्तुल्यतयोपचारात्, यथा अग्निशब्दस्य माणवके 'अग्निर्माणवकः' इति । न हि तं लोकः स्तन-प्रजनवर्त्मादिमती-मिवास्खलितप्रत्ययविषयतया स्त्रियं मन्यते । न चागमे स्त्रीशब्दस्यायं परिभाषितोऽर्थः यथा **पाणिने**रादैचो वृद्धिशब्दस्य वृद्धिरादैच् [पा० १/१/१] इति अर्थापत्त्याधिगतः येन स तस्यार्थो विज्ञायेत । स्तनादिमानेवार्थः शास्त्रे प्रसिद्धः, तथाहि –

**आ षष्ठ्याः स्त्रीत्यादौ स्तनादिभिः स्त्री**

---

१. 'वाहीकः' इति टिप्पन्याम् S ॥
२. साधारणे S ॥
३. स्मश्रु० S ॥

इत्थीओ जंति छट्ठि पुढवीं [ ] इत्यादौ सर्वत्रागमे स्तनादिमत्येव स्त्री प्रसिद्धा, न तां विहायैष स्त्रीशब्दो दृष्टः । असति तदर्थस्य बाधकेऽर्थान्तरकल्पना[29a]यां तत्रापि तथा स्यात् । न चैवमिष्यते । अत्र सङ्ग्रहार्या –

**परिभाषितो न शास्त्रे मनुजीशब्दो न लौकिकोऽपि यतः ।**
**अमुतो न तत्र बाधा स्त्रीनिर्वाणं ततो न कुतः ॥**

ननु स्त्रीवेद इत्यत्र [1]स्तनादिमत्याकारादन्यत्र स्त्रीशब्दो दृष्टो भावे । वेद इति मोहनीयोदयजन्मा चित्तविकारोऽभिलाषरूप[2] उच्यत इति चेत्, न,

**स्त्रिया इति च वेदः ।**

**स्त्रीवेदः**

स्त्रीवेद इति यदि स्त्री चासौ वेदश्चेति समानाधिकरणः समासो विज्ञायेत ततोऽन्यत्र स्त्रीशब्दो दृष्टः स्यात् । न चात्र सामानाधिकरण्ये प्रमाणमस्ति । स्त्रियाः स्तनादिमत्या वेदः स्त्रीवेद इतीह षष्ठीसमासेऽप्येतदुपपद्यत एव । न[29b]च दृष्टानतिलङ्घनेनाऽर्थोपपत्तौ [3]तदुल्लङ्घनं न्यायविदां मनोरथं पूरयति उपचारेण वा कर्मधारयः ।

स्यादेतत् – इत्थित्तं पल्लसयपुहत्तं तु [ ] इत्यत्रापि स्त्रीव्यवहारः । न ह्येकस्मिन् शरीरे स्त्रीत्वं पल्यशतपृथक्त्वं भवति [4]परेण पर(ण?)पण्णु पल्ला य [ ] इति वचनात् । अनेकशरीराश्रये तु तावन्तं [5]कालमविच्छिन्नस्त्रीवेद उपपद्यत इति चेत्, न,

**स्त्र्यनुबन्धात् पल्यानां शतपृथक्त्वोक्तिः ॥ ४३ ॥**

यद्यप्यभिव्यक्ततदाकारविच्छेदस्तदा न तत्कारणकर्मोदयविच्छेदः, तदनन्तरमेव च पुनः स्त्रीशरीरग्रहणं न च पुंस्त्वादिव्यवधानमिति स्त्रीत्वस्यानुबन्धात् इत्थित्तं पल्लसयपुहत्तम् [ ] इत्यु[30a]क्तिरुपपद्यते ।

अपि च भावाश्रयेण स्त्रीत्वस्य पल्यशतपृथक्त्वोक्तावपि
**न च पुंदेहे स्त्रीवेदोदयभावे प्रमाणम्**

---

१. 'स्तनादिमत्याः आकारात्' इत्यर्थः प्रतीयते। 'स्तनादिमत आकारात्' इति चेत् पाठः कल्प्यते तदा शोभनं भाति ॥

२. ०लापरूप S ॥

३. तदुल्लंघन S ॥

४. 'अग्रत एवाभिधानात्' इति टिप्पन्याम् S । उत्कर्षेण पञ्चपञ्चाशत् पल्योपमा देवीनामायुरित्यर्थोऽत्राभिप्रेतः ॥

५. कालमवच्छिन्न० S ॥

भावो नाम ते स्त्रीवेदोदयः । न च पुंशरीरे स विद्यते इत्यत्र प्रमाणमस्तीति स्त्रीनिर्वाणवाक्येभ्यः स्तन-प्रजनवर्त्मादिमत्या एव निर्वाणसिद्धिः । किञ्च,

**अङ्गं च ।**

**भावः सिद्धौ**

यदि यः स्त्रियां भावः स एव पुंसि भवति तेन च [1]पुमान् मुच्यते स भावो मोक्षस्याप्रतिवन्धकः, मोक्षस्य च साक्षाद् भावः कारणम्, परिणामशुद्धचा हि मुच्यन्ते, अन्यत् पुनर्भावोपग्राहितया परम्परया मोक्ष उपयुज्यते । एवं चैतेन परिणामेन पुंवत् स्त्र्यपि मोक्षमर्हति । न हि तदाका[30b]रस्य मोक्षप्रतिबन्धित्वेन सामर्थ्यमन्वयव्यतिरेकाभ्यामवधारितं यथाऽग्न्यादीनां शीतादौ येन तदकारयोगात् मोक्षाभावः स्यात् ।

यद्यपि स्त्रीवेदस्य कर्मक्षपणां प्रति विरोधोऽङ्गीक्रियते तच्छरीरव्यभिचारिवेदवादिनस्तथापि न स्त्रीनिर्वाणाभावः, यतः

**पुंवत् पुमान् स्त्र्यपि**

यथा पुंसि स्त्रीवेदः एवं स्त्रियामपि पुंवेदः स्यात् । न ह्यत्र ते किञ्चिन्नियामकमस्ति येन स्त्रियां न पुंवेदः स्यात् । ततश्च स्त्रीशरीरेणैव पुमान् भूत्वा सिध्यति । उत्कृष्टं हि ते स्त्रीसत्त्वात् पुंसत्त्वम्, सत्त्वं च भावः, यदि स्त्रीसत्त्वेन पुमान् मुच्यते पुंसत्वेन स्त्री किं न [31a]मुच्यत इति स्त्रीनिर्वाणसिद्धिः ।

यदि च स्त्रीनिर्वाणवाक्येषु स्त्रीशब्दो नाकारमुपादाय प्रवृत्तोऽपि तु वेदं तन्न युज्यते । यतः

**न सिध्यतो वेदः ॥ ४४ ॥**

अनिवृत्तिवादरसम्परायप्रविष्टक्षपके नवमगुणस्थान एव वेदक्षपणाऽधीयते । अतो न सिध्यत्काले वेदाश्रयस्त्र्यादिव्यवहारमभ्युपगच्छतः स्त्री पुमान् वा स जीव इति तदयोगः ।

**क्षपकश्रेण्यारोहे वेदेनोच्येत भूतपूर्वेण ।**

**स्त्रीति**

अथोच्यते—यद्यपि निर्वाणकाले नास्ति वेदः, अनिवृत्तिस्थान एव क्षयात्, तथापि क्षपक-[2]श्रेणीमारोहन् कश्चित्[31b]स्त्रीवेदेनारोहति [3]तदासौ स्त्री भवति, तेन निर्वाणकाले भूतपूर्वेण 'स्त्री' इत्युच्यते यथा रेचितघृतघटोऽपि घृतघट इति भूतपूर्वगत्योच्यते द्रव्यनयालम्बनेनेति[4] ।

**नितराममुख्ये मुख्येऽर्थे युज्यते नतराम् ॥ ४५ ॥**

---

१. पुमानुच्यते S ॥
२. श्रेणीनामा° S ॥
३. तदसौ S ॥
४. °लम्बनेति S ॥

अहो दुर्निखातस्योपरि निखातः, सति हि मुख्ये स्तन-जघनादिलक्षणे स्त्र्यर्थे बाधके, [१]श्मश्रु-मेहनादिलक्षणे पुमर्थे तत्र स्त्रीवेदस्य तावदसम्भवः, पुंसि भवतः पुंवेदवत् स्त्रीवेदत्व-विरोधात् । [२]नहि क्रोधादयः स्त्रियां पुंसि वाऽविशेषेण भवन्तः स्त्र्यादिभिर्विशिष्यन्ते । अभ्यु-पगमेऽपि पुंसि [३]तद्वेदोदयस्य न [४]ततः स्त्रीशब्दस्य पुंसि वृत्तिः, स्तन-प्रजनवर्मादिमदाकारस्य स्त्रीशब्दप्रवृत्तिनि[32a]मित्तस्य तत्राभावात् । तदाकारदर्शनादेव चायं स्त्रीशब्दः प्रयुज्यते लोके, न वेददर्शनात् । चित्रादौ च वेदाभावः । 'स्त्रीनिर्वाणं नास्ति' इति त्वयापि स्त्रीशब्दस्तदाकार एव प्रयुज्यते, वेदे निर्वाणाभ्युपगमात् । तत्र चैकार्थसमवायिनो वेदात् स्त्रीशब्दप्रवृत्तिरुपचारात्, पुनस्तदभावे भूतपूर्वगत्याश्रयेण स्त्रीत्वमित्युपचरितस्योपचारात् । तत्रासति मुख्यार्थबाधने पूर्व एवोपचारस्तावन्न[५] युक्तः, द्वितीयस्य पुनरुपचारस्यायुक्तिः प्रकर्षमुद्वहति, उपचाराश्रयेऽपि सत्ता-योगस्तस्य[६] [७]सः । आगमः स्त्रीनिर्वाणे प्रमाणमुपन्यस्यते—

**मनुषीषु मनुष्येषु च चतुर्दशगु[32b]णोक्तिरार्यिकासिद्धौ** प्रमाणम् ।

मनुषीषु मनुष्येषु च पृथक् चतुर्दश स्थानानि शिष्यन्ते । तत्र यदि 'मनुषीषु' इत्यपि मनुष्या एवोच्यन्ते 'मनुष्येषु चतुर्दश गुणस्थानानि भवन्ति' इत्येव गतत्वात् 'मनुषीषु चतु-र्दश गुणस्थानानि' इत्यनर्थकम् । न हि ते न मनुष्या भवन्ति ये त्वया 'मनुषीषु' इत्युच्यन्ते, तेषामपि पुंस्त्वात् । तस्माद् 'मनुषीषु' इति स्तन-प्रजनवर्मादिमत्योऽपुरुषाः स्त्रिय एवोच्यन्ते । तत्र 'मनुष्येषु' इति लिङ्गं विवक्ष्यते इति 'मनुषीषु' इत्यर्थवद् भवति । तदेतज्जीवस्थाने मनुषीषु मनुष्येपु इति च चतुर्दशानां गुणस्थानानामनुशासनमार्यिका[33a]निर्वाणे प्रमाणम् ।

यदि च मनुपीषु मनुष्येषु इति च भावनिबन्धनोक्तिः

**भावस्तवोपरिक्षयी**

तवाभिमतो वेदलक्षणो भावः अनिवृत्तिवादरसम्परायप्रविष्टनवमगुणस्थान एव क्षीयमाणः[८] ततः परं नैव विद्यते, कथं तत्र चतुर्दशगुणोक्तिरुपपद्यते ।

'मनुषीषु मनुष्येषु' इति च न भावप्रधानो निर्देशः, अपि तु तदुपलक्षितद्रव्यविषयः, तत्र गुणोक्तिरुपपद्यते इति चेत्,

**[९]अनवस्थोऽनियत उपचारः ।। ४६ ।।**

१. स्मश्रु° S ।।
२. तर्हि S ।।
३. तद्वेदोयस्य C ।।
४. 'वेदात्' इति टिप्पन्याम् S ।।
५. तावत् युक्तः S । (तावदयुक्तः?) ।।
६. एतस्योपरि = ईदृशं चिह्नं कृत्वा व्याख्यारूपम् 'उपचारात्' इति टिप्पनं S प्रतावधस्ताद् वर्तते । एवं च 'उपचारा-श्रयेऽपि सत्तायोग उपचारात् तस्य सः' इत्यर्थः प्रतीयते ।।
७. 'स आगमः' इत्यपि सम्बन्धो भवेत् ।।
८. माणे S ।।
९. अनवस्थेऽनियत S ।।

स भाव आसंसारमेकस्मिन् जीवे नियतो नेष्यते पुंसां स्त्रीत्वस्य स्त्रीणां च पुंस्त्वस्य देहान्तरे श्रवणात् । एकस्मिन् पुनर्देहे यदि यावज्जीवं पुंसि स्त्रीत्वमिष्यते तत्र[33b]प्रमाणं वक्तव्यम्, न ह्यत्र प्रत्यक्षमनुमानमागमो वा दृश्यते, यदालम्बनः पुंसि 'स्त्री' इत्युपचारो न स यावज्जीवं नियतो दृश्यते । य एव हि क्लीवतादिसादृश्यात् 'स्त्री' इत्युपचरितः स एव पुनरन्यदा दृष्टपुरुषकारः 'सिंहः पुरुषोऽयम्' इत्युच्यते । भवन्ति च क्वचिद् भीरवः क्वचिच्छूराः । ततः पुंसां स्त्रीत्वानिर्णये न तत् स्त्रीत्वं यावज्जीवं स्यात्, तस्य यावज्जीवमनवस्थानात् विपरीतस्यापि भावात् न [1]ततः स्त्रीवेदनिर्णयः, पुंवेदेऽपि कुतश्चित् सादृश्यादुपचारोपपत्तेः, भवन्नपि अनवस्थित एव [2]स्यात् तत्र ।

स्त्रीत्व-पुंस्त्वाभ्यामेककर्मवद्द्रव्यमुपलक्ष्यत इत्यन्यतरेणैवोपलक्षितत्वादिति चेत्, अनर्थकम्,

**[3]अनडुह्याऽनड्वाहीं दृष्ट्वा[ऽ[4]नड्वाहमनडुहाऽऽरूढम् ।**
**स्त्रीपुंसेतरवेदो वेद्यो नाऽनियमतो वृत्तेः ॥ ४७ ॥**
**विगतानुवादनीतौ सुर-कोपादिषु चतुर्दश गुणाः स्युः ।**
**न च मार्गणान्तर इति प्रोक्तं वेदेऽन्यथा नीतिः ॥ ४८ ॥]**

[35a]तत्रापि वेदवच्चतुर्दश गुणस्थानानि प्रसज्येरन् । न चैवं नीयते । **न च** क्वचिद् **मार्गणान्तर** एवं नीतिर्दृश्यते । सर्वत्र हि यावद्भावमेवमेव नीतिः । को वा विशेषो येन विगतेऽपि वेदे नीयते, न मार्गणान्तरे ? तस्माद् ग्रन्थच्छायापि नेया ।

**वेदेऽन्यथा नीतिः** । वेदमार्गणावसरे गुणस्थानानि नवैवोच्यन्ते । इति मनुषीषु मनुष्येषु च चतुर्दश गुणस्थानानीति न वेदाश्रयेण, अपि त्वाकारमेवाश्रित्य यस्य सर्वत्र सम्भवः ।

स्त्रीपुंसयोर्द्वैते व्यवहारानुपपत्तिः,

**पुंसि स्त्रियां स्त्रियां पुंस्यन्तश्च तथा भवेद् विवाहादिः ।**
**यतिषु न संवासादिः स्यात्**

यद्याकारेण स्त्र्यप्यन्तः पुरुषः पुरुषोऽप्यन्तः स्त्री तद्वेदोदयात् तथा सति[35b]लोकलोकोत्तरव्यवहारलोपः । लोके विवाहादिव्यवहारस्तथा प्रसज्येत – स्त्रियाः स्त्रिया पुरुषस्य पुरुषेण सह विवाह इति । लोकोत्तरश्च संवासादिर्नोपपद्यते, न हि समये स्त्रीणां पुरुषाणां च सहसंवासादिरस्ति । [5]तस्मान्न ।

वेदोदयस्यागम्यत्वादेवं व्यवहार इति चेत्,

**स्यादगतौ निष्प्रमाणेष्टिः ॥ ४९ ॥**

---

१. 'क्लीवतादेः' इति टिप्पन्याम् S ॥

२. "स्यात् । तत्र त्रीत्व-पुंस्त्वाभ्यामेककर्मवद् द्रव्यमुपलक्ष्यत इति । अन्यतरेणैवोपलक्षितत्वादिति चेत्, अनर्थकम्", इत्यमपि पाठोऽत्र भवेदिति सम्भाव्यते ॥

३. अनडुह्यऽ S ॥

४. इत आरभ्य एकं समग्रमपि ३४ तमं तालपत्रं S प्रतौ नास्ति। अतः N. P. प्रती अवलम्ब्य [ ] एतदन्तर्गतः कारिकारूप एव भागः पूरितोऽस्माभिः॥

५. 'तस्मान्न पुरुषे स्त्रीवेदोदयः' इत्यर्थो भाति॥

यद्येवम्, निष्प्रमाण एवाकारान्तरे वेदान्तरोदयाभ्युपगमः, अगम्यमानविषयत्वात् । न चात्रागमः प्रमाणमस्ति । प्रत्यक्षानुमाने लोकस्यापि तुल्ये न तत्र गतिरिति । तथा विवाहादि-प्रसङ्गः ।

ननु च नामकर्मणः शरीरनिष्पत्तिः, वेदो नाम मोहनीयोदयः । क[36a]स्तत्र प्रतिबन्धो येन विशिष्टो वेदो विशिष्ट एव शरीराकारे स्यात्, न सर्वः सर्वत्रेति ? उच्यते –

**पञ्चेन्द्रियाद्युदयवत् सुरनरगत्यादिकर्मणामुदयः ।**
**वेदस्य तत्तदङ्गे नपुंसकादिवद्‌ नरकादौ ।। ५० ।।**

यथा भिन्नकर्मत्वेऽपि कुतश्चित् प्रतिबन्धात् पञ्चेन्द्रियजात्यादिकर्मोदये एव देवमनुष्य-गत्यादिकर्मणामुदयः, अन्यथा सुरनरादीनामनिन्द्रियता एकेन्द्रियादिता वा स्यात् । वेदस्यापि यथा नारकगत्युदये नपुंसकस्यैवोदयः, देवगत्युदये स्त्रीपुंसयोरेव, अहमिन्द्रेषु च पुंवेदस्यैव, एके-न्द्रिय-विकलेन्द्रियोदये च नपुंसकस्यैव, तथा पुमादिशरीरेष्वेव पुमादिवे[36b]दोदयः सम्भाव्यते तथा दर्शनात् । उ इति पादपूरणे ।

तथा –

**नाम तदिन्द्रियलब्धेरिन्द्रियनिर्वृत्तिमिव पुमाद्यङ्गम् ।**
**वेदोदयाद् विरचयेदित्यतदङ्गे न तद्वेदः ।। ५१ ।।**

नामकर्मापि यथा तत्तदिन्द्रियनिर्वृत्तिमावरणक्षयोपशमजन्मानं तत्तदिन्द्रियलब्धिं प्राप्यैव करोति तथा पुंवेदाद्युदयादेव पुंशरीरादिनिष्पत्तिं कुर्यादिति सम्भाव्यते नियमोपलम्भादेवेति नापुमाद्यङ्गे पुंवेदाद्युदयः ।

यदि पुमादिशरीर एव पुंवेदाद्युदयः कथं पुमादीनां [१]पुमादिषु [२]स्त्र्यादिष्विव प्रवृत्तिरिति चेत्, उच्यते —

**या पुंसि च प्रवृत्तिः पुंसः स्त्रीवत् स्त्रियाः स्त्रियां च स्यात् ।**
**सा स्वक[37a]वेदात् तिर्यग्वदलाभे [३]मत्तकामिन्याः ।। ५२ ।।[४]**

सा प्रवृत्तिः पुमादीनां पुमादिवेदोदयादेव स्यात्, न स्त्र्यादिवेदोदयात् । यथा [५]मत्तका-मिन्यलाभे गोपालादीनां कामितया तिर्यक्षु प्रवृत्तिरुपलभ्यते न सा तेषां तिर्यग्भावेन, अपि तु मनुष्यभावेनैव, तथात्रापि स्यात् । अनेकावस्थो हि वेदोदयः स्यात् । तन्न तत्प्रवृत्त्या पुंसि वेदान्तरोदयकल्पनया स्त्रीनिर्वाणवाक्यनीतिरुपपद्यते ।

---

१. इत आरम्य केवलं पत्रत्रयमित्ता सटीका A प्रतिरप्युपलभ्यते ।।
२. स्त्रियादि० A. S. ।।
३. मत्तकाशिन्याः S ।।
४. S प्रतौ कुत्रचिदपि कारिकाङ्को नास्ति । केवलम् A प्रतावित आरम्य तिसृणां कारिकाणाम् ५२, ५३, ५४ इति संख्याङ्का निर्दिष्टा दृश्यन्ते । तदनुसारेणैव सर्वासां प्राक्तनीनां कारिकाणां संख्याङ्का अस्माभिर्निदिष्टा इति ध्येयम् ।।
५. मत्तकाशिन्य० S ।।

किञ्च,

**मनुजगतौ सन्ति गुणाश्चतुर्दशेत्याद्यपि प्रमाणं स्यात् ।**
**पुंवत् स्त्रीणां सिद्धौ [1]नापर्याप्तादिवद् बाधा ।। ५३ ।।**

मणुयगईए चोद्दस गुणट्ठाणाणि होंति, पंचेंदिएसु [चोद्दस] गुणट्ठाणाणि होंति, चोद्द[37b]स तसेसु गुणट्ठाणाणि होंति, [2]भवसिद्धिका य सव्वट्ठाणेसु होंति [ ] इत्येवमाद्यपि प्रवचनं स्त्रीनिर्वाणे प्रमाणम्, स्त्रीणामपि पुंवद् मनुष्यगत्यादिधर्मयोगात् । ननु चेदं सामान्यविषयं कथं विशेषे स्त्रीविषये प्रमाणं स्यात्, तद्विशेषपरिहारेण विशेषान्तरे भावेऽपि तस्य सावकाशत्वादिति चेत्, तर्हि पुंविषयेऽपि मा भूत्, सोऽपि हि विशेष एव । अथ तस्मिन् विशेषे स्यात्, अत्र कः प्रद्वेषः? न च विशेषे क्वचिदप्यभावे सामान्यविषयं प्रमाणमर्थवत् स्यात् । न च पुरुषेष्वर्थवत्ताकल्पनया स्त्रीषु तस्याप्रवृत्तिः शक्यते कल्पयितुम्, विपर्ययकल्पना[38a]या अपि प्रसङ्गात् । अतः पुरुषाणामिव स्त्रीणामप्ययमागमोऽविशेषेण चतुर्दश गुणस्थानानि प्रतिपादयन् स्त्रीनिर्वाणे प्रमाणमेव । न [3]चैवमपर्याप्तमनुष्यादीनां देव-नारक-तिरश्चामपि निर्वाणप्रसङ्गः, तेषामेतद्वाक्याविषयत्वात् । उत्सर्गस्य हि [4]नियमनिषेधेनापवादविधिविनिर्मुक्तो विषयो भवति, अन्यथा नियमाद्ययोगात् । अत्र च

मिच्छद्दिट्ठी अपज्जत्तगा [ ]
[5]सुरनारएसु चत्तारि होंति तिरिएसु जाण पंचेव [पंचसं० ४।१० ]

इत्यादिरपवादोऽवस्थितः । न चैवमार्यिकासु किञ्चिदुत्सर्गविधेर्निवर्तकं वचनं प्रमाणान्तरं वास्ति । न च निवर्तकाभावे प्रवृत्तस्योत्सर्गस्य विनिवृत्तिरस्ति । अत [6]आस्तामाहत्य स्त्रीनिर्वाणविधायी [38b]आगमः स्त्रीनिर्वाणे प्रमाणम् । अयं सामान्यविषयोऽप्यागमः पुंनिर्वाणवत् तत्र प्रमाणमेव बाधकाभावात् ।

उक्तार्थसंग्रहः —

**न च बाधकं विमुक्तेः स्त्रीणामनुशासनं प्रवचनं च ।**
**संभवति च मुख्येऽर्थे न गौण इत्यार्यिकासिद्धिः ।। ५४ ।।**

स्त्रीणां नास्त्येव निर्वाणमिति न शक्यं प्रतिपत्तुं बाधकप्रमाणाभावात्, तदायत्तो हि नास्तिताव्यवहारः । अस्तित्वे तु तस्यागमः प्रमाणमुक्तम् । न च तत्र स्त्रीशब्दस्यान्योऽर्थः शक्यते कल्पयितुं तत्र प्रमाणाभावात् । न हि तत्र मुख्यार्थासम्भवप्रतिपत्तिमन्तरेण गौणार्थकल्पनास्ति । गौणश्च [7]स्त्रीशब्दस्य पुमर्थः । तस्मान्निःश्रेयसकामेनाविपरीतं शास्त्रार्थं प्रतिपद्यमानेन अवश्यं स्त्रीनिर्वाणं प्रतिपत्तव्यम् ।

इति स्त्रीनिर्वाणपरिच्छेदः समाप्तः ।[8]

---

१. नापर्याप्त्यादि० A ।।
२. भवसिद्धिया सव्वठाणा भवंति A ।।
३. °मपर्याप्तकमनु० A ।।
४. नियमनिषेधादविधि० A ।।
५. दृश्यतां पृ० १४ टि० २ ।।
६. अर्हतामाहत्य S ।।
७. स्त्रीशब्दः पुमर्थः S ।।
८. शुभं भवतु S ।।

## ॥ [1]अथ केवलिभुक्तिपरिच्छेदः ॥

[39a]एवं स्त्रीनिर्वाणं प्रतिपाद्येदानीं केवलिभुक्तिं प्रतिपिपादयिषुः पूर्ववद् बाधकप्रमाणाशङ्कापरिहारायोपक्रमते –

**अस्ति च केवलिभुक्तिः समग्रहेतुर्यथा पुरा**

नास्ति केवलिभुक्तिः 'विकलकारणत्वात्' इत्यसिद्धो हेतुः । यत् पूर्वमकेवल्यवस्थायां [2]भुक्तेः कारणं तत् केवल्यवस्थायामपि चिरं विहारिणो भगवतः केवलिनोऽविकलमास्त एव ।

द्विविधं **भुक्तेः** कारणम् – [3]बाह्यमाभ्यन्तरं च । बाह्यं द्रव्यादि, तत् तावदास्ते, न तत्र विप्रतिपत्तिः । [4]यस्त्वाभ्यन्तरः स

**पर्याप्ति-वेद्य-तैजस-दीर्घायुष्कोदयो हेतुः ॥ १ ॥**

भुक्तस्याहारस्य तेजसा मृदूकृतस्य खलरसभावाद्युत्तरोत्तरपरिणामकारणं यतः शरीरेन्द्रियादिनिष्पत्तिः सा पर्याप्तिर्नाम कारणम्, वेदनीयं सुख-दुःखवेदनासाधनं कर्म, तैजसमन्तस्ते[39b]–जःशरीरोष्मा यतो भुक्तपाकः, [5]दीर्घमायुश्चिरजीवनं कर्म, एतदुदयात् क्षुद्वेदनोपजायते । नान्यस्य ज्ञानावरणीयादेरिह सामर्थ्यमवलोक्यते । [6]पर्याप्त्याद्युदयश्च भगवति चिरविहारिणि विद्यत एव केवलिनि । एतदुत्तरत्र निर्देक्ष्यते । एवमन्तरङ्गहेतुतः क्षुधि प्रजातायां भुक्तिप्रवृत्तिरिति विकलकारणत्वमसिद्धम् ।

किञ्च, भुक्त्यभाववादिना तत्र केवलिनि क्षुदभावो वक्तव्यः, क्षुधि हठाच्चिरविहारिणो भुक्त्यापत्तेः । तत्र नैवागमः प्रसिद्धः 'नास्ति केवलिनि क्षुत्' इति यथा सिद्धेषु । तत्र प्रमाणान्तरान्निषेधः[7] प्रवर्तमानः साक्षात् स्वभावानुपलम्भादन्यतो वा प्रवर्तेत ? तत्र स्वभावानु-

---

१. दृश्यतां पृ० १ टि० १ ॥
२. भुक्तिकारणं S ॥
३. वाह्यमभ्यन्तरं A ॥
४. यस्त्वभ्य० A ॥
५. जीवितं S ॥
६. पर्याप्त्यादयश्च भगवति चिरविहारिणि विद्यंत एव S. ॥
७. इतः परम् A प्रतिर्न लभ्यते ॥

पलम्भादभावव्यवहारो यः सत्स्वन्येपूपलम्भप्रत्ययेपु [1]भावः स्वयं सन्नुपलभ्यत एव तस्य कारणा-न्तरसाकल्ये जा[40a]यमानादुपजायते, अन्यथा वस्तुसत्तायामनुपल[2] ......................
स्वभावविप्रकर्षान्न तत्र तादृशोऽनुपलम्भः प्रत्यक्षविनि[3] ......................
ऽन्यो विधीयमानो निषिध्यमानो वा स्यात् प्रकारान्तर ......................
रुद्धविधेरभावासिद्धेः । न ह्यविरुद्धो भावः स्वयं संनि ......................
परस्परस्यानिवर्तकत्वात् । न ह्येतद् भवति नास्त्यत्र घ ......................
निषिध्यमानश्च भावस्तस्य का ......................
[40b]मात्मरूपनिवर्तनसमर्थेऽविकले कारणे सत्यभाव ......................
रणनिवृत्तिं गमयति न कारणमात्रनिवृत्तिम् । कारणमात्र ......................
यथा प्रासादादेस्तक्षादि किञ्चिदात्मस्थितेरपि यथा प्रव ......................
र्यं निवर्तयति तदायत्तत्वात् तस्य । व्यापकमपि निवर्तमा ......................
वृक्षः शिंशपाम् । न चान्यो निवर्तमानोऽन्यमात्मन्यप्र ......................
निवर्त[न]मभावस्य नियमेन नि ......................
[4]......................

**[नष्टानि न कर्माणि क्षुधो निमित्तं, विरोधिनो न गुणाः ।**
**ज्ञानादयो जिने किं सा संसारस्थितिर्नास्ति ।। २ ।।**
**तम इव भासो वृद्धौ ज्ञानादीनां न तारतम्येन ।**
**क्षुद्धीयतेऽत्र ]**

......................

[42a]यथा यथा ज्ञानादयो गुणा विवर्धन्ते तथा तथा क्षुधा तारतम्येन हातव्यं यथा प्रकाशवृद्धौ तमसा, अन्यथा विरोधासिद्धेः । न हि स्वप्रवृद्धयनुकारेणान्यत्र[5] हानिमनादधानस्तस्य विरोधी भवति, यथा श्लेष्मादेर्दध्युपयोगादि । न चैवमिह प्राणिषु ज्ञानादिवृद्धयनुकारेण क्षुन्निवृत्तिरुप-

१. "तत्रानुपलब्धिर्यथा न प्रदेशविशेषे क्वचिद् घटः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति। उपलब्धिलक्षणप्राप्तिरुप-लम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च। यः स्वभावः सत्स्वन्येपूपलम्भप्रत्ययेषु सन् प्रत्यक्ष एव भवति स स्वभावविशेषः ।२। १२–१४।" इति न्यायबिन्दौ द्वितीयपरिच्छेदे ।।

२. S प्रतौ चत्वारिंशत्तमं तालपत्रमर्धप्रायं खण्डितम्। अतो योंऽशस्त्रुटितः स बिन्दुभिरत्र दर्शितः।।

३. विवि (?) ।।

४. S प्रतौ ४१ तमं सम्पूर्णमपि तालपत्रं न लभ्यते, अतः N.P. प्रती अवलम्ब्य [ ] एतच्चिह्नान्तर्गतः कारिकात्मक एव भागोऽत्र पूरितोऽस्माभिः।।

५. 'अन्वयेन' इति S मध्ये टिप्पनम् ।।

लभ्यते । न हि बालादौ ज्ञानाद्यपचये क्षुदुपचयस्ततः प्रभृति च ज्ञानाद्युपचये तारतम्येन क्षुदपचयो लक्ष्यते । तन्न ज्ञानादिमात्रस्य क्षुधा विरोधः ।

अथ मन्येत – ये केवलिगता ज्ञानादयः प्रकर्षपर्यन्तप्राप्तास्तेषामेव [42b]क्षुधि विरोध इति,

**न च तज्ज्ञानादीनां विरोधगतिः ॥ ३ ॥**

न च केवलज्ञानादयः क्षुधं विरुन्धन्तीति शक्यं प्रतिपत्तुमतीन्द्रियत्वात् । न ह्यतीन्द्रियस्यार्थस्य केनचित् सह विरोधः प्रतीयते ।

**अविकलकारणभावे तदन्यभावे भवेदभावेन ।**
**इदमस्य विरोधीति ज्ञानं न तदस्ति केवलिनि ॥ ४ ॥**

कारणवैकल्यमपि वस्त्वभावे निबन्धनम् । अतो विकलकारणस्य वस्त्वन्तरसन्निधावभावेऽपि न विरोधः शक्यते प्रतिपत्तुम्, 'किमेतत्सन्निधावस्याभावः उत कारणवैकल्यात्' इति सन्देहात् । अतोऽविकलकारणस्य भ[43a]वतोऽन्यभावेऽभावाद् विरोधगतिः, तत्र 'अत एवास्याभावः' इति निर्णयात् । न चैवं स्वभावविप्रकृष्टेषु केवलिगुणेषु 'एतत्सन्निधौ क्षुन्न भवति' इति विरोधप्रतिपत्तिरुपजायते । अतो न ज्ञानादिभ्यस्तत्र क्षुदभावः ।

**क्षुद् दुःखमनन्तसुखं विरोधि तस्येति चेत्,**

अथ मन्येत – सुखदुःखयोर्विरोधः । न हि यत्र सुखं तत्र दुःखमेकत्र यौगपद्येनास्ति । क्षुच्च दुःखस्वरूपा । न ह्यन्यथा तत्प्रतीकाराय यत्येत । निवृत्तये हि यत्नो दुःखस्य भवति, सुखस्य प्राप्तये । भगवति चानन्तसुखं सर्वप्रदेशव्यापि अव्याहतमास्ते, तत् सन्निधीयमानं[43b] स्वविरुद्धं दुःखं निवर्तयति यथाग्निः शीतम् । तन्निवृत्तौ च तद्व्याप्यायाः क्षुधो निवृत्तिः । व्यापकनिवृत्तौ हि व्याप्यमवश्यं निवर्तते यथा शीतस्पर्शनिवृत्तौ तुषारस्पर्शः, अन्यथा तयोर्व्याप्यव्यापकभावाभावादिति ।

**कुतस्त्यं तत् ।**

सर्वपातकनिवृत्त्यात्मकमात्मावस्थानं यद्यनन्तसुखं तन्न भुक्तिवादिनस्तत्र सिद्धं क्षुदभ्युपगमात् । तत् सकलकर्मविप्रमुक्तायां निर्वेदनायां सिद्धावस्थायामेव, नार्हदवस्थायाम्, तत्र वेदनीयोदयसम्भवात् । असातोदयश्च

'गोत्तम्हि सत्त भंगा अट्ठ य भंगा हवंति वेदणिए। [दि. पञ्चसं० ५/१५]

इति पठ्यते ।

---

१. सुमतिकीर्तिविरचितायां दिगम्बरपंचसंग्रहान्तर्गतसप्ततिकाटीकायामियं व्याख्यया सहेत्थं विलोक्यते —

"गोदेसु सत्त भंगा अट्ठ य भंगा हवंति वेयणिए।
पण नव नव पण संखा आउचउक्के वि कमसो दु ॥५।१५॥

अथ गोत्र-वेदनीया-ऽऽयुषां त्रिकसंयोगभङ्गान् भङ्क्त्वा गुणस्थानेषु योजयति। नीचोच्चगोत्रद्वयस्य असदृशभङ्गाः सप्त भवन्ति। सातासातवेदनीयद्वयस्यासदृशभङ्गा अष्टौ भवन्ति। नरकगतौ नारकायुपः असदृशभङ्गाः पंच भवन्ति, तिर्यग्गत्यां

द्वावप्रमत्तयोगिषु सप्तसु भङ्गौ हि वेदनीयस्य।
[44a]सातासातोदयजौ वन्धोदयसत्त्वं योगस्य॥

अथ ज्ञानमानन्दरूपम्

श्लोकमेकं विजानानः शास्त्रं ग्रन्थार्थतोऽपि वा।
ह्लादते मानुषस्तीव्रं किं पुनः सर्वभाववित्॥ [ ]

मोहश्च दुःखरूपः। तथा च क्रोधादिना जनस्तीव्रं दग्ध इव दुःखमनुभवति, तद्विगमे च सुखायते, अतोऽस्य तत् सुखमिति।

**ज्ञानादिवन्न तज्जं विरोधि**

न ज्ञानाद्येव सुखम्, ततोऽर्थपरिच्छेदलक्षणादाह्लादरूपस्य पृथगनुभवात् सुखदुःखहेतोश्च वेदनीयस्य कर्मणः पृथगनुशासनात् तन्मूलमभ्युपगम्यते यदि तत् सुखं क्षुधं विरुणद्धि ज्ञान-क्षमादिवृद्धौ तज्जन्मनः सुखस्यापि वृक्षविवृद्धौ छाया[या] इव विवृद्धेरस्मदादिषु क्षुधो हानिः ज्ञानादिविवृद्धिमनु भवेत्। न चैवम्। तस्मान्न ज्ञानादिवत् तज्जन्म सुखं क्षुधं विरुन्ध्यात्।

**न परं ततो दृष्टम्॥५॥**

[44b]अथान्यदेव किञ्चित् तत्र सुखं क्षुद्विरोधि भोजनजन्म वाभ्युपगम्यते, न तत् प्रमाणतो दृष्टं येनाभ्युपगम्येत। प्रमाणमूलो ह्यभ्युपगमः।

**आहारविषयकाङ्क्षारूपा क्षुद् भवति भगवति विमोहे।**
**कथमन्यरूपताऽस्या न लक्ष्यते येन [1]जायेत॥६॥**

स्वभावविरुद्धोपलब्धेः कारणानुपलब्धेर्वा भगवति केवलिनि क्षुदभावः। क्षुच्चेयमाहार-विषयकाङ्क्षास्वभावा, नास्याः स्वभावान्तरमुपलक्षयामो येन वीतमोहेऽपि जायेत। विषयकाङ्क्षा

---

तिर्यगायुषो भङ्गा नव विसदृशा भवन्ति, मनुष्यगत्यां मनुष्यायुषो भङ्गा नव विसदृशा भवन्ति, देवगतौ देवायुषो भङ्गाः पञ्च विसदृशाः स्युः। गोत्रे ७, वेद्ये ८, आयुषि ५, ९, ९, ५॥ . . . .

. . . वेदनीये गोत्रवत् प्रथमा भङ्गाश्चत्वारो भवन्ति। गोत्रस्य पञ्चमं भङ्गं त्यक्त्वा चत्वार आद्या भङ्गा वेद्यस्य भवन्ति। सातासातैकतरमेव योग्यस्थाने वन्ध उदयो वा स्यात्। सत्त्वं सयोगान्तं द्वे द्वे अयोगे ते उदयागते। तेन वेदनीयस्य गुणस्थानं प्रति भङ्गाः मिथ्यादृष्टयादिप्रमत्तपर्यन्तेषु ते चत्वारो भङ्गाः—सातवन्ध-सातोदय-सातासातोभयसत्त्वमिति प्रथमो भङ्गः। सातवन्धा-सातोदयोभयसत्त्वमिति द्वितीयो भङ्गः। असातवन्धसातोदयोभयसत्त्वमिति तृतीयो भङ्गः। असातवन्धोदयोभयसत्त्वमिति चतुर्थो भङ्गः। इति चत्वारो भङ्गाः। मिथ्यात्व-सास्वादन-मिश्रा-ऽविरत-देशविरत-प्रमत्तगुणस्थानेषु पट्सु प्रत्येकं चत्वारो भङ्गा भवन्ति। खलु निश्चयेन अप्रमत्तादिसयोगान्तेषु सप्तसु द्वौ द्वौ भङ्गौ प्रत्येकं भवतः। असातावेदनीयस्य वन्धस्य षष्ठे प्रमत्ते व्युच्छेदत्वाद-प्रमत्तादि सयोगान्तं केवलसातस्यैव वन्धः। ततः सातस्य वन्धः सातस्योदयः उभयसत्त्वमिति प्रथमभङ्गः। सातवन्धः असातो-दयः सातासातसत्त्वमिति द्वितीयभङ्गः। एवं द्वौ द्वौ भङ्गौ अप्रमत्तादिसयोगान्तं प्रत्येकं भवतः। अयोगस्य द्विचरमसमये वन्ध-रहितमादिमभङ्गद्वयं भवति,सातोदयः सातासातसत्त्वम् १ असातोदयः सातासातसत्त्वमिति २ द्वौ भङ्गौ अयोगस्योपान्त्यसमये भवतः। अयोगस्य चरमसमये असातोदयः सत्त्वमप्यसातम् १ उदये सातं सत्तायां सातं २ नानाजीवापेक्षया ज्ञेयमिति।"—पृ० ३०३-३०८॥

१. जायते S॥

भवति लोभात्मिका तृष्णा मोहः, स निर्मोहस्वभावेन विरुध्यते । निर्मोहश्च भगवान् केवली, [1]मोहक्षयादावरणान्तरायक्षयाच्च केवलम् [ तत्त्वार्थ० १०/१ ] इति वचनात् । आप्तता वाऽन्यथा हीयेत । [45a]अतो न क्षुद्वान् केवली, क्षुद्विरोधिविमोहतारूपत्वात् । यत्र यद्विरोधि सन्निधीयते न तत्र तत् सन्निहितं भवति यथाग्निसन्निधाने शीतमिति प्रतीयते । तथा विषयकाङ्क्षात्मिका क्षुद् मोहरूपा मोहनीयाद् भवितुमर्हति । तच्च मोहनीयं कर्म कारणं तस्मिन् भगवति साकल्येन विनष्टम् । कारणाभावाच्च कार्याभाव यथाग्न्यभावाद्धूमाभाव इति क्षुदभावः ।

तक्षाद्यभावेऽपि प्रासादादयस्तिष्ठन्ति तक्षादीनां प्रासादाद्यात्मलाभे आत्मलाभकारणानां तत्स्थितावकारणत्वात् । न चैवं कर्मफलानां कर्माभावेऽप्यवस्थानं सिद्धेष्वपि प्रसङ्गादिति चेत्,

**न [2]क्षुद्विमोहपाको यत् प्रतिसङ्ख्यानभावननिवर्त्या ।**
**न भवति, विमोहपाकः सर्वोऽपि हि तेन विनिवर्त्यः ।। ७ ।।**

[45b]यो यो मोहः स सर्वः प्रतिपक्षभावनया निवर्त्यते यथा क्षमादिभावनया क्रोधादिः । मोहनिग्रहाय हि प्रतिपक्षभावनोपदेशि सर्वमध्यात्मशास्त्रम् । यदि च क्षुदपि मोहात्मिका प्रतिपक्षभावनया कयाचित् क्रोधादिवदुपरमन्ती अनुभूयेत । तथा च तयैव क्षुद् विनिवर्तते निराबाधा च कायस्थितिरमोहाऽनवद्येति शास्त्रं क्षमादिवत् क्षुत्प्रतीकारे प्रतिपक्षभावनामेवोपदिशेत्, न क्लेशभूयिष्ठां ध्यानाध्ययनविघातकारिणीमनर्थिकां पिण्डैषणाम् । न चैवम् । तस्मान्न क्षुद्विमोहरूपा ।

न च धृतिभावनया क्षुन्निवृत्तिरस्ति । धृत्या हि कियन्तं कालमाहारो [46a] नोपादीयेत, न क्षुदभावः । तथा च धृत्याऽनुपात्ताहाराः क्षुदग्निप्लुष्टकायाः प्राणानुज्झन्ति । न च क्षुदभावेऽनश्नतां शरीरपातो युक्तः । चित्तव्याक्षेपाच्च कदाचित्तदनाभोगो नाभावात् । तथा च ततः प्रत्युत्थितः सद्यः क्षुधं वेदयते ।

**शीतोष्णबाधतुल्या क्षुत् तत्**

यत एवं तस्माद्यथा शीतोष्णबाधा न मोहरूपा न च मोहनीयपाकः, वेदनीयादेव तु प्राप्तादुपजायते । न हि तत्र रतेररतेर्वा निमित्तभावः, सामर्थ्यानुपलक्षणात् । क्षुदपि तादृशी बाधारूपा, [3]न मोहरूपा, न मोहनीयकार्या, न हि तत्र मोहनीयस्य कश्चिद् व्यापारः शक्यः कल्पयितुं येन मोहनिवृत्तेर्निवर्तेत ।

ननु च क्षुत्पिपासार्दिता वयमाहारं तदाध्यानपराः काङ्क्षामः । [46b]यदि न मोहरूपा क्षुत् तत् कथम् ? इति चेत्, उच्यते —

---

१. "मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम्" — तत्त्वार्थ० १०/१ ।।

२. अत्र विमोहशब्दस्य 'विशिष्टो मोहः' इत्यर्थः प्रतीयते ।। ३. न मोहरूपा S. ।।

तत्प्रतिविधानकाङ्क्षा तु ।
मूढस्य भवति मोहात् तया भृशं बाध्यमानस्य ।। ८ ।।

न क्षुत् स्वयमग्निदाहादितुल्या मोहः । या तु तत्र क्षुत्प्रतिकारिण्यशनपानादौ शीतोष्ण-बाधाप्रतिकारिणीव वस्तुनि काङ्क्षा सा मोहः, न क्षुत्, क्षुत्कार्यं तु । सापि यस्य मोहनीयं कर्मास्ति तस्य क्षुधा भृशं बाध्यमानस्य [१]तद्धीप्रवृद्धमोहोदयस्य मोहादुपजायते, क्षुत् तत्र तदुद्वोधने व्याप्रियते । भगवतस्तु क्षुधि समुपजातायामपि मोहनीयाभावाद् मोहरूपा काङ्क्षा नोपजायते, काङ्क्षाकार्यविनिर्मुक्ता केवला क्षुदेव निर्धूम इव पावकः समवतिष्ठते यदि न नष्टकर्म[२] ...

..............................................................................................................

[तैजसमृद्धकृतस्य द्रव्यस्याभ्यवहृतस्य पर्याप्त्या ।
[३]उत्तरपरिणामे क्षुत् क्रमेण, भगवति च तत् सर्वम् ।। ९ ।।
ज्ञानावरणीयादेर्ज्ञानावरणादि कर्मणः कार्यम् ।
क्षुत् [४]तद्विलक्षणा,ऽस्यां न तस्य सहकारिभावोऽपि ।। १० ।।
[५]क्षुद्बाधिते न जाने न चेक्ष इत्यस्ति ननु विपर्यासः ।
तद्वेद्यं सहकारि तु तस्य, न तद् वेद्यसहकारि ।। ११ ।।
ज्ञानावरणादीनामशेषविगमात्[६] क्षुधि प्रजातायाम् ।
[७]अपि न ज्ञानादीनां हानिः स्यादितरवत् तत्र ।। १२ ।।
नष्टविपाकः(का?) क्षुदिति प्रतिपत्तौ भवति चागमविरोधः ।
शीतोष्णक्षुदुदन्यादयो हि ननु वेदनीय इति ।। १३ ।।

---

१. तद्वा प्रवृद्ध० S । 'तया प्रवृद्ध°' इति 'तद्वा[वया] प्रवृद्ध°' इति वा पाठोऽपि कल्पयितुं शक्यते ।।

२. S प्रतौ इतः परं पञ्च पत्राणि न प्राप्तानि । अतः N. P. प्रती अवलम्ब्य [ ] एतच्चिह्नान्तर्गतः मूलकारिकात्मक एव भागः पूरितोऽस्माभिः ।।

३. अनुत्तर० N.P. ।।

४. ०णा स्यान्न तस्य N ।।

५. क्षुद् वाधते N । 'क्षुद्बाधितो' इत्यपि पाठोऽत्र स्यात् । तुलना —
"क्षुत्पीडितोऽहं न किञ्चिज्जानामि, न किञ्चित् पश्यामि, उत्थातुमपि न शक्नोमि' इति प्रतीतेः" — न्यायकुमु० पृ० ८६१ ।।

६. विगमा P ।।

७. अपि तद् ज्ञानादिनां N. P. ।
"भगवति तु तदावरणादेरशेषस्यापगमात् सत्यामपिक्षुधि न ज्ञानादि क्षयः । न ह्यग्न्यभावे सत्यपीन्धने धूमो भवति । तत्कर्मचतुष्टयप्रभवत्वे च क्षुधः "एकादश जिने क्षुत्पिपासादयः परीषहा वेदनीयप्रभवाः" [ ] इत्यागमविरोधः ।" —न्यायकुमु० पृ० ८५४ ।।

**[1]उदयः फलं न तस्मिन्नुदीरणेत्यफलता न वेद्यस्य ।**
**नोदीरणा फलात्मा तथा भवेदायुरप्यफलम् ।। १४ ।।**

**अनुदीर्णवेद्य इति चेद् न क्षुद्, वीर्यं किमत्र, न हि वीर्यम् ।**
**क्षुदभावे, [2]क्षुदभावे न स्थित्यै, क्षुधि तनोर्विलयः ।। १५ ।।**

**अपवर्तते[ऽ]कृतार्थं नायुर्ज्ञानादयो न हीयन्ते । ।**
**जगदुपकृतावनन्तं वीर्यं किं गततृषो भुक्तिः ।। १६ ।।**

[51a][न ज्ञानादिक्षयः, न च वीतमो]हस्य रसगृद्धिरस्ति । तन्नास्य भोजने किञ्चित् प्रयोजनमुपलभामहे । न च विना प्रयोजनेन प्रेक्षावतामस्ति प्रवृत्तिरिति न केवलिभुक्तिः ।

उच्यते —

**ज्ञानाद्यलयेऽपि जिनेऽमोहेऽपि स्यात् क्षुदुद्गते भुक्तिः ।**

यदप्युक्तं 'न ज्ञानादिक्षयो वीतमोहत्वाच्च न रसगृद्धिः' तथापि क्षुदुद्गते भवति भुक्तिः, दीर्घकालविहरणात्, अन्यथा तदयोगात् । भवति च रागेण विनौषधपानादिवत् प्रयोजनापेक्षया भुक्तिः, यथा समुद्घातध्यानयोगेन कर्मक्षपणे यत्नः । न च भोजने प्रयोजनं नास्ति ।

**वचनगमनादिवच्च प्रयोजनं स्वपरसिद्धिः स्यात् ।। १७ ।।**

वचनगमनस्थानासनोत्थानादि[51b]षु क्रियान्तरेषु भगवतः केवलिनो यत् प्रयोजनमभ्युपगम्यते स्वसिद्धिः परसिद्धिर्वा तदेव भुक्तिक्रियायामपि प्रयोजनं स्यात् । तथाहि —

**ध्यानस्य समुच्छिन्नक्रियस्य [3]चरमक्षणे गते सिद्धिः ।**
**सा नेदानीमस्ति, स्वस्य परेषां च कर्तव्या ।। १८ ।।**

अयोगिकेवलिनि समुच्छिन्नक्रियाऽप्रतिपाति शुक्लध्यानं भवति, तस्य चरमक्षणे गते सिद्धिर्भवति । सा नेदानीमुत्कर्षेण देशोनपूर्वकोटिं विहरति सयोगकेवलिनि भगवतीत्यात्मनः कर्तव्या परेषां च भव्यानाम् । अतस्तत्सिद्धिः प्रयोजनं स्यात् ।

ननूक्तम् — अनपवर्त्यायुः, तत एव तत्सिद्धिर्भवतीति ।

**रत्नत्रयेण मु[52a]क्तिर्न विना तेनास्ति चरमदेहस्य ।**
**भुक्त्या तथा तनोः स्थितिरायुषि नन्वनपवर्त्येऽपि ।। १९ ।।**

---

१. उदयं P ।।
२. 'क्षुदभावो न स्थित्यै' इत्यपि पाठोऽत्र साधुर्भवेत् ।।
३. चरमे N ।।

चरमदेह इति सम्यग्दर्शनज्ञानचारित्रैर्भवन्ती मुक्तिर्न विना तैर्भवति । चरमदेहत्वं च ध्रुवं मुक्तिकारणानि तस्य सम्पद्यन्त इत्येव विज्ञायते । तथाऽनपवर्तायुष्क इति भुक्त्या भवन्ती कायस्थितिर्न विना तया भवति । अनपवर्तायुष्कत्वमिति च ध्रुवमस्यानपवर्तहेतवः सम्पद्यन्ते [१]नापवर्तहेतव इति विज्ञायते ।

किञ्च,

**असति क्षुद्बाधेऽङ्गेऽलये न शक्तिक्षयो न संक्लेशः ।**
**आयुश्चानपवर्तं बाधलयौ प्राग्वदधुनापि ।। २० ।।**

अनपवर्तायुष्कत्वात् केवली न भुङ्क्ते इति ब्रुवाणस्य चरमदेह[52b]स्य छद्मस्थकालेऽपि भुक्त्यभावप्रसङ्गः, तदाप्यनपवर्तायुष्कत्वस्याविशेषात् । अथ तदा भुक्त्यभावे शक्तिक्षयः स्यात् शक्तिक्षयनिबन्धनस्यान्तरायस्य विद्यमानत्वात्, संक्लेशश्च संक्लेशहेतोर्मोहनीयस्य भावात्, अतस्तन्निवृत्तये भुङ्क्ते इति । स शक्तिक्षयः संक्लेशश्च किं क्षुद्बाधायां तया च शरीरहानौ सत्यां भवति उत असत्यामेव? असत्यां यदि स्याद् भुक्तावपि सत्यां प्राप्नोति । तदसत्यां क्षुद्बाधायां शरीरहानौ च न शक्तिक्षयो न संक्लेशः । अथ सत्याम्, यथा छद्मस्थावस्थायां सत्यप्यनपवर्तायुष्कत्वे क्षुद्बाधा तया च शरीरविलयः तथा केवल्यवस्थायामपि क्षु[53a]द्बधा तया च — मा भून्मोहाभावात् संक्लेशः — शरीरविलयः प्राप्नोतीति ।

**देशोनपूर्वकोटीविहरणमेवं सतीह केवलिनः ।**
**सूत्रोक्तमुपापादि न, मुक्तिश्च न नियतकाला स्यात् ।। २१ ।।**

शरीरविलये च 'मासपृथक्त्वेनाष्टाभिश्च वर्षैरूना पूर्वकोटी उत्कर्षेण केवलिविहरणकालः शास्त्रे पठ्यते' तन्नोपपन्नम् । नियतकाला च मुक्तिस्तस्य केवलिनो देशोनपूर्वकोट्यादेः प्रविहरणकालस्यान्ते भवन्ती [२]तत्कालाप्राप्तौ न स्यात्, ओदनपाकादिवत् ।

अतः

**अपवर्तहेत्वभावे[३]ऽनपवर्तनिमित्तसम्पदायुष्के[४] ।**
**स्यादनपवर्तं इति तत् केवलिभुक्तिं समर्थयते ।। २२ ।।**

अ[53b]नपवर्तमायुः अपवर्तहेतवो यदि न सन्निपतेयुः जीवनहेतवश्च यदि सम्पद्येरन्नेवं स्यात्, नान्यथा । भुक्तिश्च जीवनहेतुः, तदभावश्चापवर्तकारणम्, इत्यनपवर्तायुष्कत्वं केवलिनो दीर्घकालविहारस्य भुक्तिमेव प्रतिपादयति, न तदभावम् ।

---

१. नापवर्तन्ते हेतवः S । (नापवर्तने हेतवः ?) ।। २. तत्काल° S. ।।
३. °भावो P. S. ।।
४. °दायुष्को P ।।

अस्मदादीनामाहारेण विना कायस्थितिर्न भवति, स पुनर्भगवान् केवली वीर्यान्तरायापायविजृम्भितानन्तवीर्यलब्धिः, ततो विनाप्याहारेणास्य कायस्थितिर्भवतीति चेत्, न,

**आयुरिवाभ्यवहारो जीवनहेतुर्विनाभ्यवहृतेश्चेत् ।**
**तिष्ठत्यनन्तवीर्यो विनायुषा[ऽऽ]कालमपि तिष्ठेत् ॥ २३ ॥**

आयुष्कर्मवदाहारोऽपि कायस्थितिकार[54a]णम् । तत्र यद्यनन्तवीर्यत्वाद् विनाहारेण कायस्थितिः स्यात् तर्हि विनायुष्केणापि कर्मणा स्यात्, ततश्च न कदाचिच्छरीरवियोग इति मुक्त्यभावप्रसङ्गः । आयुरपेक्षायामेवमाहारापेक्षाप्यस्तु । न ह्यनन्तं वीर्यं कायस्थितावाहारकारणे निरपेक्षमन्यत्र सापेक्षमित्यत्र प्रमाणमुपलभामहे ।

किञ्च,

**न ज्ञानवदुपयोगो वीर्ये, कर्मक्षयेण लब्धिस्तु ।**
**तत्रायुरिवाहारोऽपेक्ष्येत न तत्र बाधास्ति ॥ २४ ॥**

अन्तरायक्षयाद् यथावरणक्षयाज्ज्ञानदर्शनोपयोगावेव भवतस्तथा न वीर्योपयोगः, लब्धिस्तु केवला भवति, उपयोगस्तु स्वभावे निमित्तान्तरमपेक्षते, अन्यथा सिद्धानामपि[54b] [1]स्यात्, तथा च तत्र सर्वज्ञानोपयोगवत् सर्वव्यापारप्रसङ्गः । तथा च पठन्ति —

विरियंतरायदेसक्खएण सव्वक्खएण वा लद्धी ।
अभिसंधिजमियरं वा तत्तो विरियं सलेसस्स ॥
सिद्धाण विरियलद्धी लद्धिसविरिया य सव्वसंसारी ।
सेलेसीकरणेणं अविरिय सविरिया य जोगजुया ॥ [ ] इति ।

तत्र निमित्तान्तरापेक्षायां शरीरधारणे आयुर्वदभ्यवहारस्यापि दृष्टसामर्थ्यस्यापेक्षास्तु, न तत्र किञ्चिद् बाधकं पश्यामः ।

अथैवं मन्येत — तच्छद्मस्थकाले भुक्तेनाहारेण सर्वज्ञकालेऽपि कायस्थितिः स्यात्, त(य)थेदानीं पूर्वगृहीतेनाहारेण मासं चत्वारिंशतं वा दिवसाना[55a]दितीर्थे च वर्षं मध्यमतीर्थेषु च षण्मासानिति ।

**मासं वर्षं वापि च तानि शरीराणि तेन भुक्तेन ।**
**तिष्ठन्ति न [2]चाऽऽकालं, न चान्यथा पूर्वमपि भुक्तिः ॥ २५ ॥**

किं तान्येव शरीराणि विनाहारेण सर्वज्ञकाले स्थितौ मूलमुतान्यत् किञ्चित् तत् ? यदि अन्यत्, तन्न ज्ञानादि कारणम् उक्तवत् । यदि तान्येव शरीराणि, केवलिकालात् पूर्वमपि तथा

---

१. अस्मिस्ताल पत्रे मध्ये रिक्तभागे केनचिदधस्तादेवं लिखितमस्ति — "श्रीज्ञानवर्धनगणयः मासचतुष्टयान्तराचार्या भविष्यंति निश्चितं श्री २४ त् प्रसादात् ।" एतत्पुस्तकस्वाम्यादिना केनचिदेतल्लिखितमिति संभाव्यते ॥

२. वाकाले S ॥

स्थितिः स्यात्, ततश्छद्मस्थानामपि पूर्वकोटिभुक्त्यभावः स्यात् । न च 'एवमस्तु' इत्यभ्युपगन्तुं शक्यं निष्प्रमाणकत्वात् । तस्माच्छद्मस्थकाले यथा तानि शरीराणि तेन तेनाहारेण मासं वर्षं वा तिष्ठन्ति – न सर्वकालं – तावता तदाहारपरिणा[55b]मस्यानिष्ठितेः, एवमुत्तरकालमपि विनाहारेण, न सर्वकालम्, निबन्धनाभावात् । न [1]चाहाराभावे शक्या शरीरस्थितिः कल्पयितुम् ।

**तैलक्षये न दीपो न जलागममन्तरेण जलधारा ।**
**तिष्ठति तनोस्तथा स्थितिरपि न विनाहारयोगेन ॥ २६ ॥**

दीपज्वालादिकल्पं [2]शरीरिणां शरीरम् । तत्र यथा तैलं दीपज्वालारूपेण परिणमत इति तैलक्षये न दीपज्वालाऽवतिष्ठते, जलं जलधारारूपेणावतिष्ठत इति न जलागममन्तरेण जलधारा स्थितिमास्तिध्नुते, तथा शरीरमपि भुक्ताहारात्मनावतिष्ठत इति भुक्त्यभावे न स्थितिं प्रतिपद्यते । तथा च पठन्ति —

जेण करणेण भुत्तमाहारं खलरसं काउं समत्थो हो[56a]इ तं करणमाहारपज्जत्त(त्ती) त्ति वुच्चइ [ ] इत्यादि ।

**कायस्तथाविधोऽसौ जिनस्य यदभोजनस्थितिरितीदम् ।**
**वाङ्मात्रं नात्रार्थे प्रमाणमाप्तागमोऽन्यद्वा ॥ २७ ॥**

अस्मदादिशरीरमाहारमन्तरेण न तिष्ठति, केवलिशरीरं पुनस्तथाविधं यदाहारमन्तरेणापि तिष्ठतीति चेत्, वाङ्मात्रमेतत्, नात्राप्तवचनं प्रत्यक्षमनुमानं वा प्रमाणमुपलभामहे । ननु च केवलिशरीरमस्मदादिशरीरविलक्षणमस्वेदममलमष्टोत्तरशतलक्षणालङ्कृतं नवशतव्यञ्जनं समचतुरस्रसंस्थानं वज्रर्षभनाराचसंहननममराणामपि विस्मयनीयशोभं स्निग्धमधुरगोक्षीरपाण्डुररुधिरं सुरभितरुनिःश्वासमरुजं विजयि सुघोपमप्रमितवीर्यं स्मर्यते ।

**अस्वे[56b]दादि प्रागपि सर्वाभिमुखादि तीर्थकरपुण्यात् ।**
**स्थितनखतादि सुरेभ्यो नाक्षुद् देहान्यता वास्ति ॥ २८ ॥**

इदमस्वेदादिगुणं शरीरं केवलज्ञानोत्पत्तेः प्रागप्याजन्मनस्तथाविधमेव तीर्थकरपरमदेवानाम्, तेनाभुक्तौ प्रागप्यभुक्तिप्रसङ्गः । अतीर्थकरकेवलिनां च न तथाविधं शरीरमिति तेषां भुक्तिप्रसङ्गः । सर्वजनाभिमुख्यं पश्यद्वैरविमोचनं समन्ततो योजनव्यापि सर्वजनसाधारणं वचनमिति तीर्थकरनामकर्मोदयाद् भवति । न तस्य क्षुत्प्रतिबन्धि वचनमस्ति । इतरकेवलिषु च का गतिः स्यात् । स्थितनखश्मश्रुकेशं प्रभामण्डलाद्यलंकृतमिति देवविक्रियाजन्माऽपरश्च समवसरणादिर्बहिर्विभवो न बुभुक्षानिवृत्तये भवति । [57a]न च तावता शरीरान्तरमस्ति, तद्भवमरणाभावात्, जन्मान्तरवदत्रापि च पुनर्भवान्तरप्रसङ्गात् ।

---

१. चाहारभावे S ॥
२. शरीरिणां S ॥

अथैवं मन्येत —

**भुक्तिर्दोषो यदुपोष्यते[1] न दोषश्च भवति निर्दोषे ।**

निर्दोषः केवली, भुक्तिश्च दोषः, यदुपवासादि प्रत्याख्यानं क्रियते । दोषश्च न निर्दोषे युक्तः कल्पयितुमिति ।

नैतद् युक्तम्,

**इति निगदतो निषद्याद्यर्हति न स्थानयोगादेः ॥ २९ ॥**

एवं ब्रुवाणस्य निषद्या गमनमिति चार्हति न स्यात्, स्थानयोगादिना निषद्यादेः प्रत्याख्यानात् । वचनमपि न स्यात्, मौनव्रतिकोपलम्भात् । शरीरस्याप्यन्ते परित्यागात् तदभावोऽपि प्रसज्येत ।

यथा वेदनी[57b]योदयजन्मानो रोगादयः परीषहाः क्वचिन्न भवन्ति तथा क्षुदपि क्वचित् सत्यपि वेदनीयोदये न स्यादिति चेत्, न,

**रोगादिवत् क्षुधो न व्यभिचारो वेदनीयजन्मायाः ।**
**प्राणिनि**

वेदनीयजन्मनो रोगादिवत् क्षुधो वेदनीयोदये सति नाभावः शक्यः कल्पयितुम्, रोगादिवत् क्षुधः क्वचिदपि प्राणिनि व्यभिचाराभावात् । देवेषु भोगभूमिजेषु तीर्थकरादिषु वा जन्मतो रोगाभावः श्रूयते, अद्यापीह केचिदरोगाः दृश्यन्ते, न क्षुधः क्वचित् प्राणिनि आसंसारं व्यभिचारोऽस्ति ।

अन्यत्र व्यभिचाराभावेऽपि अत्र व्यभिचारः स्यादिति चेत्, न, प्रमाणाभावात् ।

भावे किं [58a] प्रमाणम् ? न अन्यत्र व्यभिचाराभाव एव प्रमाणम्, अन्यत्र व्यभिचाराभावेऽपि व्यभिचारदर्शनात् 'पक्वान्येतानि फलानि, एतच्छाखाप्रभवत्वात्, उपयुक्तफलवत् । पक्वा एते तण्डुलाः, एतत्स्थाल्यन्तर्गतत्वात्, उद्धृततण्डुलवत् । लोहलेख्यं व्रजम्, पार्थिवत्वात्, घटवत् । स श्यामः, तत्पुत्रत्वात्, इतरतत्पुत्रवत् ।' इत्यादौ तथा मिथ्यादृष्ट्यादिषु गुणस्थानेषु अव्यभिचाराणां मिथ्यादर्शनादीनामुत्तरगुणस्थानेष्वभावः । तदन्यत्राव्यभिचारेऽपि तत्र तद्भावमिच्छता तत्र तद्भावे प्रमाणं वक्तव्यम् । नावश्यं कारणानि कार्यवन्ति भवन्तीति न वेदनीयोदयः प्रमाणं भवति । उच्यते – अविकलं [58b] कारणं कार्यं गमयति, तस्य तद्भावनिष्ठत्वात् । दर्शितं छद्मस्थवत् तत्र क्षुधः कारणावैकल्यम् ।

किञ्च,

**एकादश जिन इति जिनसामान्यविषयं च ॥ ३० ॥**

---

१. ०ष्येत S ॥

एकादश जिने [तत्त्वार्थ० ९/११] इति जिनसामान्यविषयमेतत्, न प्रविभागगोचरम्, [१]अत्रेयत् क्षुत्पिपासाद्यस्ति, न सर्वभावः, क्वचित् कस्यचिद् भावेन सामान्ये सर्वभावो भवतीति न विरोधः।

ननु च

सीउसिण छुहा तण्हा तणफासनिसिज्जजल्लवहचरिया।
दंसमसगं च रोगा एक्कारस वेयणीयं ही[ ]ति।

शीतादयः परीसहा वेदनीयजन्मानः पठ्यन्ते। वेदनीयं च कर्म केवलिन्यस्तीति कारण-सद्भावात् ते तत्र सन्तीत्युपचारेणोच्यते। 'एकादश जिने न [59a] सन्ति' इति च नञं केचित् तत्राध्याहरन्ति

**तद्धेतुकर्मभावात् परीषहोक्तिर्न जिन [२]उपस्कार्या।**

**नञ् नाऽभावासिद्धेः**

प्रमाणेन चेद् यथाश्रुतमर्थः शास्त्रस्य बाध्यते तदोपचारकल्पनाऽध्याहारो वा भवति, अन्यथाऽतिप्रसङ्गात्। अत्र च तेषामभावः प्रमाणेन न प्रतिपन्न इति यथाश्रुतत्यागेनोपचार-कल्पनाऽध्याहारो वा [न] युज्यते।

**इत्यादेर्न[:] क्षुदादिगतिः ॥ ३१ ॥**

एवमादेरागमादस्माकं केवलिनि क्षुत्पिपासाप्यस्तीति।

सर्वज्ञस्य भुक्तिर्न भवति, अन्तरायोपपत्तेः, न हि सकलं पश्यन् मांसादि न पश्यति।

**परमावधियुक्तस्य छद्मस्थस्येव नान्तरायोऽपि।**

**सर्वार्थदर्शने स्यात्**

कप्पजुगाऽसंखा वहू[३] . . . (?) [59b] सोही नरस्सऽणु[४]विइयेति

छद्मस्था अपि महर्षयोऽवधिज्ञानिनः सकलं त्रैलोक्यं पश्यन्ति अथ च भुञ्जते। यथा न तेषामन्तरायस्तद्वत् केवलिनोऽपि स्यात्। इन्द्रियगोचर एव ह्यन्तरायः।

**न चान्यथा पूर्वमपि भुक्तिः, ॥ ३२ ॥**

यद्येवं नेष्यते तीर्थकरपरमदेवस्य छद्मस्थकालेऽपि सति श्रुतावधिमनःपर्ययधरस्य सकलं जगत् पश्यतः परमर्षेर्भुक्तिर्न स्यात्। न चावधिज्ञानोपयोगमवधिज्ञानी न करोतीति शक्यं

---

१. S प्रतौ अत्रे इत्यक्षरद्वयं घृष्टप्रायत्वादस्पष्टं कष्टेन सम्भावितमस्माभिः। किञ्चित् सन्दिग्धं तत्॥

२. अत्र S प्रतौ घृष्टान्यक्षराणि तथापि कथञ्चित् 'उपस्कार्यो' इति पठितुं शक्यते। N. P. प्रत्योरपि **उपस्कार्यः** इति पाठः॥

३. S प्रतौ इतः परं द्वित्राण्यक्षराण्यतीव घृष्टत्वात् सम्यक् पठितुं न शक्यन्ते। (णाउं?) इत्यादयः पाठाः **यथायोगं** सम्भावनीया अत्र सुधीभिः॥

४. अणोर्द्वितीये परमे इत्यर्थः कदाचित् स्यात्॥

वक्तुम्, अनिन्द्रियगोचरस्याप्यन्तरायत्वे इन्द्रियगोचरवदुपयोगेन [१]भवितव्यम्, अन्यथेन्द्रियविषयत्वमपि मा भूत् ।

यदि भुङ्क्ते केवली तस्य मतिज्ञानप्रसङ्गः विषयिविष[60a]यसम्बन्धात् । न च केवलिनो मतिज्ञानमस्ति ।

**इन्द्रियविषयप्राप्तौ यदभिनिबोधप्रसञ्जनं भुक्तौ ।**
**तच्छब्द-रूप-गन्ध-स्पर्शप्राप्त्याप्रतिक्षिप्तम् ।। ३३ ।।**

नेन्द्रियविषयप्राप्तिसम्बन्धमात्रेण मतिज्ञानं भवति । कथं तर्हि ? इन्द्रियविषयसम्बन्धेन मतिज्ञानावरणीयस्य कर्मणः क्षयोपशमे सति प्रादुर्भावात् । तथा च पठन्ति — **तदिन्द्रियानिन्द्रियनिमित्तम्** [तत्त्वार्थ १/१४] इति । न च केवलिनः प्रक्षीणाशेषावरणस्य तथाविधं ज्ञानमिति । यथा श्रोत्रादीनामिन्द्रियाणां दिव्यतूर्यादिरवेण गणधरदेवादिरूपेण सुगन्धिकुसुमधूपादिवासादिगन्धेन मरुत्सिंहासनादिस्पर्शेन योगेऽपि न मतिज्ञानं भवति तथा जिह्वारसप्राप्तावपि ।

भुक्तौ कथं मलचिन्तेति चेत्

**छद्मस्थे तीर्थकरे [२]विष्वणनानन्तरं च के[60b]वलिनि ।**
**चिन्ता मलप्रवृत्तौ या सैवात्रापि भुक्तवति ।। ३४ ।।**

**नित्यं [३]निःस्वेदत्वं(त्व)निर्मलते तीर्थकरपरमदेवस्य** [ ]

इति छद्मस्थावस्थायामपि मलाभावं पठन्ति ।

**नत्थि कालोऽकालो वा सायमाणस्स भिक्खुणो** [ ]

इति भोजनानन्तरं च केवलज्ञानोदयमभ्युपगच्छति केवलिनश्च भुक्तौ मलप्रसङ्गं चोदयतीति अहो महामोहः !

एवं न केवलिनि भुक्तेर्बाधकमस्ति प्रमाणम् ।

**[विग्रहगतिमापन्नाद्यागमवचनं च सर्वमेतस्मिन् ।**
**भुक्तिं ब्रवीति तस्माद् द्रष्टव्या केवलिनि भुक्तिः ।। ३५ ।।]**[४]

[५]**विग्गहगय सिद्धा य अणाहारा सेसा आहारया जीवा । सुहुमेगिंदियपहुइ जाव सजोगिकेवलित्ति सव्वे आहारया जीवा** [ ]

इति चागमः केवलिनि विस्पष्टं भुक्तिमाचष्टे । तस्मात् केवलिभुक्तिरभ्युपगन्तव्या । नात्र व्यामोहः कर्तव्यः ।

---

१. भवतिभव्यं S ।। २. विष्वणनं भोजनमित्यर्थः ।। ३. 'निःस्वेदत्वं निर्मलता' इत्यपि पाठोऽत्र सम्भवेत् ।।
४. N. P. प्रती अवलम्ब्य पूरितेयं कारिकास्माभिः ।।
५. "विग्गहगइमावन्ना केवलिणो समुहना अजोगी य । सिद्धा य अणाहारा सेसा आहारया जीवा ।।" इति **जीवसमासे** [गा० ८२] दिगम्बरीये **पञ्चसंग्रहे** [१ । १७७] च ।।

ननु च 'आहारकाः' इति वचनादाहारसामान्यं सिध्यति, न भुक्तिर्नामाहा[61a]र-विशेषः, द्विविधो ह्याहारः – आभोगाहारोऽनाभोगाहारश्चेति। सामान्योक्तौ विशेषस्य बाधकाभावे कः प्रसङ्गं निवारयेत्? नहि सर्वविशेषाभावे सामान्यं सम्भवति। कस्यचिद् विशेषस्य भावे तद्वदितरस्यापि भावो विशेषाभावात्।

**[नाऽ]नाभोगाहारो निरन्तरः, सो[ऽ]विशेषितो नञ्वत्।**

न चासावनाभोगाहार एवोक्तो विशेषानभिधानात्। आहारका इति हि सामान्येनोच्यते, न तत्र 'अनाभोगाहारकाः' इति विशेषोऽभिधीयते, तत्र यथा 'अनाहाराः' इति प्रतिषेधे सामान्येन आभोगाहारस्यानाभोगाहारस्य च प्रतिषेधः, अन्यथा अन्यतरभावप्रसङ्गा[61b]त्, तथा विधिरपि विशेषाभावात्। न चाभोगाहारो नास्त्येव, प्रत्यक्षेणोपलम्भात्। न चाहारशब्द-वाच्यताऽस्य नास्ति, लोके प्रतीतत्वात्। न चागमे नास्ति,

आभोगओ अणाभोगतो य निव्वत्तिओ दुहाहारो।
अणुसमयमणाभोगो नेओ पज्जत्ति आहारो॥
पक्खेवो लेवो वि य तसतिरियनराणमेवमाहारो।
लेवाहारो चेव य नेरइएगेंदियसुराणं॥
लेवाहारो दुविहो ओजो मणभक्खणत्ति देवाणं।
लेवो खलु ओजमओ सेसाणं देववज्जाणं॥ [ ] ति।
मणसाहारा देवा वोंदाहारा अ नरयनरतिरिया।
एगेंदियाइजीवा काएण रसं अवहरंति॥ [ ]

इति प्रपञ्चेन वर्णना[1] ........................................................................

**[युक्त्याऽभेदे नाङ्गस्थिति-पुष्टि-क्षुच्छमास्तेन॥ ३६॥**
**तस्य विशिष्टस्य स्थितिरभविष्यत् तेन सा विशिष्टेन।**
**यद्यभविष्यदिहैषां शाली-तरभोजनेनेव॥ ३७॥**

इति केवली[य]भुक्तिप्रकरणम्]

---

१. इतः परं S प्रतौ अवशिष्टानि पत्राणि नोपलभ्यन्ते। अतोऽस्य ग्रन्थस्यावशिष्टा सार्धा कारिका समाप्त्युल्लेखसहिता N. P. प्रती अवलम्ब्यात्र [ ] एतादृशे कोष्ठके उपन्यस्यते॥

## प्रथमं परिशिष्टम् ।

# ॥ शाकटायनाचार्यविरचितं [1]स्त्रीनिर्वाणप्रकरणम् ॥

प्रणिपत्य भुक्ति–मुक्तिप्रदममलं धर्ममर्हतो दिशतः ।
वक्ष्ये स्त्रीनिर्वाणं केवलिभुक्तिं च सङ्क्षेपात् ॥ १ ॥
अस्ति स्त्रीनिर्वाणं पुंवद् यदविकलहेतुकं, स्त्रीषु ।
न विरुध्यते हि रत्नत्रयसम्पद् निर्वृतेर्हेतुः ॥ २ ॥
रत्नत्रयं विरुद्धं स्त्रीत्वेन यथाऽमरादिभावेन ।
इति वाङ्मात्रं, नात्र प्रमाणमाप्तागमोऽन्यद् वा ॥ ३ ॥
जानीते जिनवचनं, श्रद्धत्ते, चरति चार्यिका[ऽ]शबलम् ।
नाऽस्याऽस्त्यसंभवोऽस्यां, नादृष्टविरोधगतिरस्ति ॥ ४ ॥
सप्तमपृथिवीगमनाद्यभावमव्याप्तमेव मन्यन्ते ।
निर्वाणाभावेनाऽपश्चिमतनवो न तां यान्ति ॥ ५ ॥
विषमगतयोऽप्यधस्ताद् उपरिष्टात् तुल्यमासहस्रारम् ।
गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतुः ॥ ६ ॥
वादविकुर्वाणत्वादिलब्धिविरहे श्रुते कनीयसि च ।
जिनकल्प–मनःपर्यवविरहेऽपि न सिद्धिविरहोऽस्ति ॥ ७ ॥
वादादिलब्ध्यभाववदभविष्यद् यदि च सिद्ध्यभावोऽपि ।
साऽऽसामवारयिष्यत यथैव जम्बूयुगादारात् ॥ ८ ॥

---

१. यद्यपि अस्मिन्नेव ग्रन्थे पृ० १–७ इत्यत्र स्त्रीनिर्वाणप्रकरणमिदं मुद्रितम् तथापि A प्रतिसंगत्यर्थं यथाकथञ्चित् कारिकाणां संख्याङ्का अस्माभिस्तत्रोपन्यस्ताः, दृश्यतां पृ० १ टि० २। तदनन्तरं वैक्रमे पञ्चदशे शतके केनचिज्जैनविदुषा संकलितायां **बृहट्टिपनिकायां** विद्यमानो निम्नलिखित उल्लेखोऽस्माभिर्दृष्टः—

"केवलिभुक्तिस्त्रीमुक्तिप्रकरणं शब्दानुशासनकृत्शाकटायनाचार्यकृतम्। तत्संग्रह श्लोकाश्च ९४।"

अयं च "९४" इत्युल्लेखः सम्यक् संगच्छते; यतः स्त्रीनिर्वाणप्रकरणे सवृत्तिकानामार्याणां संग्रहार्याणां च सम्भूय ५७ संख्या वर्तते, केवलिभुक्तौ च ३७ आर्याः, अत उभयमीलनेन ९४ संख्या सम्यग् जाघटीति। अतस्तदनुसारेण कारिकाणां संख्याङ्कान् दर्शयितुं पुनरपि स्त्रीनिर्वाणप्रकरणमत्र मुद्रयत इति ध्येयम्। पाठान्तरादिकं तु पृ० १–७ इत्यत्रैव द्रष्टव्यम्। इतः परं परिशिष्टेषु स्त्रीनिर्वाणप्रकरणस्य कारिकाङ्का एतत्प्रथमपरिशिष्टानुसारेणैव प्रदर्शयिष्यन्त इत्यपि ध्येयम्॥

'स्त्री'ति च धर्मविरोधे प्रव्रज्यादोषविशतो 'स्त्री'ति ।
बालादिवद् वदेयुर्न 'गर्भिणी बालवत्से'ति ॥ ९ ॥
यदि वस्त्राद्विमुक्तिः, त्यज्येत तद् अथ न कल्पते हातुम् ।
मुक्त्यङ्गं प्रतिलेखनवद्, अन्यथा देशको दुष्येत् ॥ १० ॥
त्यागे सर्वत्यागो ग्रहणेऽल्पो दोष इत्युपादेशि ।
वस्त्रं गुरुणाऽऽर्याणां परिग्रहोऽपीति भुक्त्यादौ ॥ ११ ॥
"यत् संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोऽन्यदधिकरणमाहाऽर्हन् ॥ १२ ॥
अस्तैन्यबाहिरव्युत्सर्गविवेकैषणादिसमितीनाम् ।
उपदेशनमुपदेशो ह्युपधेरपरिग्रहत्वस्य" ॥ १३ ॥
निर्ग्रन्था(न्थी)व्यपदेशः शास्त्रे सर्वत्र नैव युज्येत ।
उपधेर्ग्रन्थत्वेऽस्याः पुमानपि तथा न निर्ग्रन्थः ॥ १४ ॥
'अपरिग्रह एव भवेद् वस्त्राभरणाद्यलङ्कृतोऽपि पुमान् ।
ममकारविरहितः, सति ममकारे सङ्गवान् नग्नः ॥ १५ ॥
आचार्याद्यासक्तं स्वयमादित नो मुमुक्षुका लोभात् ।
उपसर्गाद्यासक्तमिवाम्बरमपरिग्रहस्तस्याः ॥ १६ ॥
काये ममकारेऽपि च सपरिग्रह एव नैवमुक्तः स्यात् ।
तत्र यथा संलग्ने नो ममकारस्तथा वस्त्रे ॥ १७ ॥
ग्रामं गेहं च विशन् कर्म च नोकर्म चाददानोऽपि ।
अपरिग्रहोऽममत्वोऽपरिग्रहो नान्यथा कश्चित् ॥ १८ ॥'

—इति सङ्ग्रहार्याः ।

संसक्तौ सत्यामपि चोदितयत्नेन परिहरन्त्यार्या ।
हिंसावती पुमानिव न जन्तुमालाकुले लोके ॥ १९ ॥
गृहिणो ममत्वयोगात् संयमसाधनगृहीत्यभावाच्च ।
अयतं चरतश्चरणं न विद्यते तेन नो मोक्षः ॥ २० ॥
त्रिस्थानोक्ता दोषास्त्रयो[ऽ]पदेशा यते[:] सचेलत्वे ।
अपरिषहसहिष्णुत्वं ह्रीश्च जुगुप्सा च देहस्य ॥ २१ ॥
वस्त्रं विना न चरणं स्त्रीणामित्यर्हतोच्यत, विनापि ।
पुंसामिति न्यवार्यत, तत्र स्थविरादिवन्मुक्तिः ॥ २२ ॥

अर्शोभगन्दरादिषु गृहीतचीरो यतिर्न मुच्येत ।
उपसर्गे वा चीरेऽङ्गादिः संन्यस्यते चान्ते ॥ २३ ॥
मुक्त्यङ्गमचेलत्वं नोच्येत तदन्यथा नरस्यापि ।
आचेलक्यायोग्याऽयोग्या सिद्धेरदीक्ष्य इव ॥ २४ ॥
इति जिनकल्पादीनां मुक्त्यङ्गानामयोग्य इति सिद्धेः ।
स्यादष्टवर्षजातादिरयोग्योऽदीक्षणीय इव ॥ २५ ॥
संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे ।
योगचिकित्साविधिरिव कस्यापि कथञ्चिदुपकारी ॥ २६ ॥
वस्त्राद् न मुक्तिविरहो भवतीत्युक्तं, समग्रमन्यच्च ।
रत्नत्रयान्न चान्यद् मुक्त्यङ्गं शिष्यते सद्भिः ॥ २७ ॥
प्रव्राजना निषिद्धा क्वचित्तु रत्नत्रयस्य योगेऽपि ।
धर्मस्य हानि–वृद्धी निरूपयद्भिर्विवृद्धयर्थम् ॥ २८ ॥
अप्रतिवन्द्यत्वाच्चेत् संयतवर्गेण नार्यिकासिद्धिः ।
वन्द्यन्तां ता यदि तेनोनत्वं कल्प्यते तासाम् ॥ २९ ॥
सन्त्यूनाः पुरुषेभ्यस्ताः स्मारणवारणादिकारिभ्यः ।
तीर्थकराकारिभ्यो न तावता[ऽ]सिद्धिरङ्गगतेः ॥ ३० ॥
अर्हन् न वन्दते न च जिनकल्पादिरिति गणधरादीनाम् ।
प्राप्ताऽन्यथा[ऽ]विमुक्तिः, स्थानं स्त्रीपुंसयोस्तुल्यम् ॥ ३१ ॥
'ये यान्न मुक्तिभाजो वन्दन्ते ते तथैव मुच्यन्ते ।
इत्यप्यवन्दनं स्यान्नामोक्षोऽवन्दनात् तेन ॥ ३२ ॥'

– इति सङ्ग्रहार्या ।

अपकृष्यते श्रिया स्त्री पुंसः सर्वत्र किं न तन्मुक्तौ ।
इत्यमुनाऽक्षेप्य स्त्रीपुंसाः सिद्धाः, समम्रुक्तवम् ॥ ३३ ॥
मायादिः पुरुषाणामपि देशादिप्रसिद्धयभावश्च ।
षण्णां संस्थानानां तुल्यो वर्णत्रयस्यापि ॥ ३४ ॥
स्त्री नाम मन्दसत्त्वा मुक्त्यङ्गसमग्रता न तेनात्र ।
तत् कथमनल्पधृतयः सन्ति हि शीलाम्बुनिधिवेलाः ॥ ३५ ॥
ब्राह्मी सुन्दर्यार्या राजिमती चन्दना गणधरान्या[:] ।
अपि देवासुरमहिता विख्याताः शीलसत्त्वाभ्याम् ॥ ३६ ॥

गार्हस्थ्येऽपि सुसत्त्वा विख्याताः शीलवतितमा जगति ।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ॥ ३७ ॥
सन्त्यज्य राज्यलक्ष्मीं पति-पुत्र-भ्रातृ-बन्धुसम्बन्धम् ।
पारिव्राज्यवहायाः किमसत्त्वं सत्यभामादेः ॥ ३८ ॥
महता पापेन स्त्री मिथ्यात्वसहायकेन, न सुदृष्टिः ।
स्त्रीत्वं चिनोति, तत्र तदङ्गे क्षपणेति निर्मानम् ॥ ३९ ॥
अन्तःकोटीकोटीस्थितिकानि भवन्ति सर्वकर्माणि ।
सम्यक्त्वलाभ एवाशेषाघक्षयकरो मार्गः ॥ ४० ॥
अष्टशतमेकसमये पुरुषाणा'मादिरागमः सिद्धौ ।
स्त्रीणां, न मुख्ययोगे गौणोऽर्थो मुख्यहानिर्वा ॥ ४१ ॥
शब्दनिवेशनमर्थः प्रत्यासत्त्या क्वचित् कयाचिदसः ।
तदयोगे, योगे सति शब्दस्यान्यः कथं कल्प्यः ॥ ४२ ॥
अव्यभिचारी मुख्योऽविकलोऽसाधारणोऽन्तरङ्गश्च ।
विपरीतो गौणोऽर्थः, सति मुख्ये धीः कथं गौणे ॥ ४३ ॥
स्तनजघनादिव्यङ्ग्ये स्त्रीशब्दोऽर्थे, न तं विहायैषः ।
दृष्टः क्वचिद्, अन्यत्र त्वग्निर्माणवकवद् गौणः ॥ ४४ ॥
[1]'आ षष्ठ्याः स्त्रीत्यादौ स्तनादिभिः स्त्री, स्त्रिया इति च वेदः
स्त्रीवेदः, स्त्र्यनुबन्धात् पल्यानां शतपृथक्त्वोक्तिः ॥ ४६ ॥
न च पुंदेहे स्त्रीवेदोदयभावे प्रमाणमङ्गं च ।
भावः सिद्धौ, पुंवत् पुमान् स्त्र्यपि, न सिध्यतो वेदः ॥ ४७ ॥
क्षपकश्रेण्यारोहे वेदेनोच्येत भूतपूर्वेण ।
'स्त्री'ति नितरामसुख्ये मुख्येऽर्थे युज्यते नतराम् ॥ ४८ ॥
मनुषीषु मनुष्ये च चतुर्दशगुणोक्तिरार्यिकासिद्धौ ।
भावस्तवोपरिक्षय्यनवस्थोऽनियत उपचारः ॥ ४९ ॥
अनडुह्याऽनड्वाहीं दृष्ट्वाऽनड्वाहमनडुहाऽऽरूढम् ।
स्त्रीपुंसेतरवेदो वेद्यो नाऽनियमतो वृत्तेः ॥ ५० ॥

---

१. अस्याः कारिकाया 'आ षष्ठ्याः स्त्रीत्यादौ स्तनादिभिः स्त्री' इत्यंशस्य वृत्तौ एका संग्रहार्या वर्तते (पृ० ३३), अतस्तत्र '॥ ४५ ॥' अङ्कोऽस्माभिर्दत्तः। सा च संग्रहार्या शाकटायनाचार्येण एवमुपन्यस्ता —

"अत्र संग्रहार्या —

परिभाषितो न शास्त्रे मनुजीशब्दो न लौकिकोऽपि यतः। अमुतो न तत्र बाधा स्त्रीनिर्वाणं ततो न कुतः॥" [४५ ॥]

विगतानुवादनीतौ सुरकोपादिषु चतुर्दश गुणाः स्युः ।
न च मार्गणान्तर इति प्रोक्तं वेदेऽन्यथा नीतिः ॥ ५१ ॥
पुंसि स्त्रियां स्त्रियां पुंस्यन्तश्च तथा भवेद् विवाहादिः ।
यतिषु न संवासादिः स्यादगतौ निष्प्रमाणेष्टिः ॥ ५२ ॥
पञ्चेन्द्रियाद्युदयवत् सुरनरगत्यादिकर्मणामुदयः ।
वेदस्य तत्तदङ्गे नपुंसकादिवदु नरकादौ ॥ ५३ ॥
नाम तदिन्द्रियलब्धेरिन्द्रियनिर्वृत्तिमिव पुमाद्यङ्गम् ।
वेदोदयाद् विरचयेदित्यतदङ्गे न तद्वेदः ॥ ५४ ॥
या पुंसि च प्रवृत्तिः पुंसः स्त्रीवत् स्त्रियाः स्त्रियां च स्यात् ।
सा स्वकवेदात् तिर्यग्वदलाभे मत्तकामिन्याः ॥ ५५ ॥
मनुजगतौ सन्ति गुणाश्चतुर्दशेत्याद्यपि प्रमाणं स्यात् ।
पुंवत् स्त्रीणां सिद्धौ नापर्याप्तादिवद् बाधा ॥ ५६ ॥
न च बाधकं विमुक्तेः स्त्रीणामनुशासनं प्रवचनं च ।
सम्भवति च मुख्येऽर्थे न गौण इत्यार्यिकासिद्धिः ॥ ५७ ॥

॥ इति स्त्रीनिर्वाणप्रकरणम् ॥

## द्वितीयं परिशिष्टम् ।

**[ स्त्रीनिर्वाणसम्बन्धिनी चर्चा यत्रोपलभ्यते तेभ्यः कतिपयप्राचीनग्रन्थेभ्य उद्धृत्य उपयोग्यंशोऽत्र दीयते ]**

श्री हरिभद्रसूरिविरचितायां **ललितविस्तराख्यायां चैत्यवन्दनसूत्रवृत्तौ** स्त्रीनिर्वाणसम्बन्धिनी चर्चा —

"एक्को वि णमोक्कारो जिणवरवसहस्स वद्धमाणस्स ।
संसारसागराओ तारेइ नरं व नारिं वा ।। ३ ।।।

एकोऽपि नमस्कारः... जिनवरवृषभाय वर्धमानाय यत्नात् क्रियमाणः सन्... संसारः ...सागर इव संसारसागरः तस्मात् तारयति...'नरं व नारिं वा' पुरुषं वा स्त्रियं वा । पुरुषग्रहणं पुरुषोत्तमधर्मप्रतिपादनार्थम् । स्त्रीग्रहणं तासामपि तद्भव एव संसारक्षयो भवतीति ज्ञापनार्थम् । यथोक्तं **यापनीयतन्त्रे —**

'णो खलु इत्थी अजीवो, ण यावि अभव्वा, ण यावि दंसणविरोहिणी, णो अमाणुसा, णो अणारिउप्पत्ती, णो असंखेज्जाउया, णो अइकूरमई, णो ण उवसन्तमोहा, णो ण सुद्धाचारा, णो असुद्धबोंदी, णो ववसायवज्जिया, णो अपुव्वकरणविरोहिणी, णो णवगुणठाणरहिया, णो अजोग्गा लद्धीए, णो अकल्लाणभायणं ति कहं न उत्तमधम्मसाहिग" त्ति[1] ।

तत्र 'न खलु' इति नैव स्त्री अजीवो वर्त्तते, किन्तु जीव एव, जीवस्य चोत्तमधर्म्मसाधकत्वाविरोधः तथादर्शनात् । न जीवोऽपि सर्व्व उत्तमधर्म्मसाधको भवति, अभव्येन व्यभिचारात्, तद्व्यपोहायाह – न चाप्यभव्या, जातिप्रतिषेधोऽयम्, यद्यपि काचिदभव्या तथापि सर्वैवाभव्या न भवति, संसारनिर्वेद-निर्वाणधर्म्माद्वेष-शुश्रूषादिदर्शनात् । भव्योऽपि कश्चिद्दर्शनविरोधी यो न सेत्स्यति, तन्निरासायाह – नो दर्शनविरोधिनी, दर्शनमिह सम्यग्दर्शनं परिगृह्यते तत्त्वार्थश्रद्धानरूपम्, न तद्विरोधिन्येव, आस्तिक्यादिदर्शनात् । दर्शनाविरोधिन्यपि अमानुषी नेष्यत एव, तत्प्रतिषेधायाह – नो अमानुषी, मनुष्यजातौ भावात् विशिष्टकरचरणोरुग्रीवाद्यवयवसन्निवेशदर्शनात् । मानुष्यप्यनार्योत्पत्तिरनिष्टा, तदपनोदायाह – नो अनार्योत्पत्तिः, आर्येष्वप्युत्पत्तेः, तथादर्शनात् । आर्योत्पत्तिरप्यसंख्येयायुर्नाधिकृतसाधनाय, इत्येतदधिकृत्याह – नो असङ्ख्येयायुः सर्वैव, सङ्ख्येयायुर्युक्ताया अपि भावात्, तथादर्शनात् । सङ्ख्येयायुरपि अतिक्रूर-

---

[1] आदित आरभ्य एतत्पर्यन्तः सर्वोऽपि पाठः प्रायोऽक्षरशो योगशास्त्रस्य (३–१२४) स्वोपज्ञवृत्तावपि दृश्यते ।।

मतिः प्रतिषिद्धा, तन्निराचिकीर्षयाऽऽह — नातिक्रूरमतिः, सप्तमनरकायुर्निबन्धनरौद्रध्यानाभावात् । तद्वत् प्रकृष्टशुभध्यानाभाव इति चेत्, न, तेन तस्य प्रतिबन्धाभावात्, तत्फलवद् इतरफलभावेनाऽनिष्टप्रसङ्गात् । अक्रूरमतिरपि रतिलालसाऽसुन्दरैव, तदपोहायाह — नो न शुद्धाचारा, कदाचित् शुद्धाचारापि भवति, औचित्येन [1]परापकरणवर्ज्जनाद्याचारदर्शनात् । शुद्धाचाराप्यशुद्धबोन्दिरसाध्वी, तदपनोदायाह — नो अशुद्धबोन्दिः, काचित् शुद्धतनुरपि भवति, [2]प्राक्कर्म्मानुवेधतः संसञ्जनाद्यदर्शनात् कक्षास्तनादिदेशेषु । शुद्धबोन्दिरपि व्यवसायवर्ज्जिता निन्दितैव, तन्निरासायाह — नो व्यवसायवर्ज्जिता, काचित् परलोकव्यवसायिनी, [3]शास्त्रात् तत्प्रवृत्तिदर्शनात् । सव्यवसायाप्यपूर्वकरणविरोधिनी विरोधिन्येव, तत्प्रतिषेधमाह — नो अपूर्वकरणविरोधिनी, अपूर्वकरणसम्भवस्य स्त्रीजातावपि प्रतिपादितत्वात् । अपूर्वकरणवत्यपि नवगुणस्थानरहिता नेष्टसिद्धये, [इति] इष्टसिद्ध्यर्थमाह — नो नवगुणस्थानरहिता, तत्सम्भवस्य तस्याः प्रतिपादितत्वात्, नवगुणस्थानसंगतापि लब्ध्ययोग्या अकारणमधिकृतविधेः, इत्येतत्प्रतिक्षेपायाह — नायोग्या लब्धेः आमर्षौषध्यादिरूपायाः, कालौचित्येनेदानीमपि दर्शनात् । कथं द्वादशाङ्गप्रतिषेधः ? तथाविधविग्रहे ततो दोषात्, श्रेणिपरिणतौ तु कालगर्भवद् भावतो भावोऽविरुद्ध एव । लब्धियोग्याप्यकल्याणभाजनोपघातान्नाभिलषितार्थसाधनायालमित्यत आह — नाकल्याणभाजनम्, तीर्थकरजननात्, नातः परं कल्याणमस्ति । यत एवमतः कथं नोत्तमधर्म्मसाधिकेति ? उत्तमधर्म्मसाधिकैव । अनेन तत्तत्कालापेक्षयैतावद्गुणसम्पत्समन्वितैवोत्तमधर्म्मसाधिकेति विद्वांसः । केवलसाधकश्चायम्, सति च केवले नियमाद् मोक्षप्राप्तिरित्युक्तमानुषङ्गिकम् ।" — पृ० ४०१–४०६ [दिव्यदर्शन साहित्य समिति प्रकाशित]

अस्य ललितविस्तरांशस्य श्री **मुनिचन्द्र**सूरिविरचिता पञ्जिका —

'सप्तमे'त्यादि, सप्तमनरकेऽतिक्लिष्टसत्त्वस्थाने आयुषो निबन्धनस्य रौद्रध्यानस्य तीव्रसंक्लेशरूपस्याभावात् स्त्रीणाम्, 'षष्ठीं च स्त्रियः' इतिवचनात् ।

'तद्वत्' प्रकृतरौद्रध्यानस्येव 'प्रकृष्टस्य' मोक्षहेतोः 'शुभध्यानस्य' शुक्लरूपस्य अभाव 'इति' एवं 'चेत्' अभ्युपगमो भवतः । अस्य परिहारमाह — 'न', नैवैतत् परोक्तम्, कुत इत्याह — 'तेन' प्रकृतरौद्रध्यानेन 'तस्य' प्रकृतशुभध्यानस्य 'प्रतिबन्धाभावाद्,' अविनाभावायोगात् । तत्प्रतिबन्धसिद्धौ हि व्यापककारणयोर्वृक्षत्वधूमध्वजयोर्निवृत्तौ शिशपाधूमनिवृत्तिवत् प्रकृतरौद्रध्यानाभावे प्रकृष्टशुभध्यानाभाव उपन्यसितुं युक्तः । न चास्ति प्रतिबन्धः, कुत इत्याह — 'तत्फलवत्', तस्य प्रकृष्टशुभध्यानस्य फलं मुक्तिगमनम्, तस्येव, 'इतरफलभावेन'

---

१. "परोपकरणार्जनाद्याचार दर्शनात्" इति प्रत्यन्तरे पाठः ।।

२. "प्राक्कर्मानुरोधतः" इति प्रत्यन्तरे पाठः ।।

३. "शास्त्रादौ" इति प्रत्यन्तरे पाठः ।।

प्रकृतरौद्रध्यानफलस्य सप्तमनरकगमनलक्षणस्य भावेन युगपत् सत्तया, 'अनिष्टप्रसङ्गात्' परमपुरुषार्थोपघातरूपस्यानिष्टस्य प्रसङ्गात् । प्रतिबन्धसिद्धौ हि शिंशपात्वे इव वृक्षत्वं, धूम इव वा धूमध्वजः, प्रकृष्टशुभध्यानभावे स्वफलकारिण्यवश्यंभावी प्रकृतरौद्रध्यानभावः स्वकार्यकारी स्वकार्यकारित्वाद्वस्तुनः स्वकार्यमाक्षिपन् कथमिव परमपुरुषार्थं नोपहन्यादिति ।

'श्रेणी'त्यादि । 'श्रेणिपरिणतौ तु' क्षपकश्रेणिपरिणामे पुनः वेदमोहनीयक्षयोत्तरकालं 'कालगर्भवत्', काले प्रौढे ऋतुप्रवृत्त्युचिते उदरसत्त्व इव, 'भावतो' द्वादशाङ्गार्थोपयोगरूपात्, न तु शब्दतोऽपि, 'भावः' सत्ता द्वादशाङ्गस्य, 'अविरुद्धो' न दोषवान् । इदमत्र हृदयम्— अस्ति हि स्त्रीणामपि प्रकृतयुक्त्या केवलप्राप्तिः, शुक्लध्यानसाध्यं च तत्, 'ध्यानान्तरिकायां शुक्लध्यानाद्यभेदद्वयावसान उत्तरभेदद्वयानारम्भरूपायां वर्तमानस्य केवलमुत्पद्यते' इति वचनप्रामाण्यात् । न च पूर्वगतमन्तरेण शुक्लध्यानाऽऽद्यभेदौ स्तः 'आद्ये पूर्वविदः' [तत्त्वार्थ. ९-३९] इति वचनात्, दृष्टिवादश्च न स्त्रीणामिति वचनात्, अतस्तदर्थोपयोगरूपः क्षपकश्रेणिपरिणतौ स्त्रीणां द्वादशाङ्गभावः क्षयोपशमविशेषाददुष्ट इति ।"

श्री **अभयदेव**सूरिविरचितायां **सन्मतितर्क**वृत्तौ स्त्रीनिर्वाणसम्बन्धिनी चर्चा—

"अथ स्त्रियो मुक्तिभाजो न भवन्ति, स्त्रीत्वात्, चतुर्दशपूर्वसंविद्भागिन्य इव । अत्र यदि 'सर्वाः स्त्रियो मुक्तिभाजो न भवन्ति' इति साध्येत तदा सिद्धसाध्यता, अभव्यस्त्रीणां मुक्तिसद्भावानभ्युपगमात् । अथ 'भव्या अपि तास्तद्भाजो न भवन्ति' इति साध्यते तदा अत्रापि सिद्धसाध्यता भव्यानामपि सर्वासां मुक्तिसंगानिष्टेः

"भव्वा वि ते अणंता सिद्धिपहं जे ण पावेंति"

[इति] वचनप्रामाण्यात् । अथ अवाप्तसम्यग्दर्शना अपि ता न तद्भाजः इति पक्षः, अत्रापि सिद्धसाध्यता तदवस्थैव, प्राप्तोज्झितसम्यग्दर्शनानां तासां तद्भाक्त्वानिष्टेः । अथ अपरित्यक्तसम्यग्दर्शना अपि न तास्तद्भाजः तथापि सिद्धसाध्यता, अप्राप्ताऽविकलचारित्राणां सम्यग्दर्शनसद्भावेऽपि तत्प्राप्त्यनभ्युपगमात् । अथ अविकलचारित्रप्राप्तिरेव तासां न भवति, कुत एतत्? यदि स्त्रीत्वात् पुरुषस्यापि सा न स्यात् पुरुषत्वात् । अथ पुरुषेसकलसावद्ययोगनिवृत्तिरूपा चित्तपरिणतिः स्वसंवेदनाध्यक्षसिद्धा स्वात्मनि अन्यैरनुमानादवसीयते, ननु सा स्त्रियां तथैव किं नावसीयते येन तत्र तस्याः स्वाग्रहावेशवशाद भावः प्रतिपाद्यते । अथ तासां भगवता नैर्ग्रन्थ्यस्य अनभिधानाद् न तत्प्राप्तिः, असदेतत्, तासां तस्य [१]भगवता—

"णो कप्पइ निग्गंथस्स णिग्गंथीए वा अभिन्नतालपलंबे पडिगाहित्तए" [बृहत्कल्प उ. १ सू. १] इत्याद्यागमेन बहुशः प्रतिपादनात् अयोग्यायाश्च प्रव्रज्याप्रतिपत्तिप्रतिषेधस्य—

१. तुलना—पृ० १९॥

"अट्ठारस पुरिसेसुं वीसं इत्थीसु" [ ] इत्याद्यागमेन विधानाच्च । विशेषाप्रतिषेधस्य शेषाभ्यनुज्ञापरत्वाच्च न तासां भगवत्प्रतिपादितनैग्रन्थ्यनिमित्ताऽविकलचारित्रप्राप्त्यनुपपत्तिः । अथ तथाभूतचारित्रवत्त्वेऽपि न तासां तद्भाक्त्वमिति साध्यार्थः, तथापि अनुमानबाधितत्वं पक्षस्य दोषः । तथाहि—[1]यद् अविकलकारणं तद् अवश्यमुत्पत्तिमत् यथा अन्त्यावस्थाप्राप्तबीजादिसामग्रीकोऽङ्कुरः, अविकलकारणश्च तस्यामवस्थायां सीमन्तिनीमुक्त्याविर्भावः इति कथं न पक्षस्य अनुमानबाधा? अथ स्त्रीवेदपरिक्षयाभावात् न अविकलचारित्रप्राप्तिस्तासामिति न मुक्तिभाक्त्वम् तर्हि पुरुषस्यापि पुरुषवेदापरिक्षयात् न अविकलचारित्रप्राप्तिरिति न मुक्तिप्राप्तिर्भवेत् । अथ तत्परिक्षये शैलेश्यवस्थाभाविचारित्रप्राप्तिमतः पुरुषस्य मुक्तिप्राप्तिर्न प्राक् तर्हि सीमन्तिन्या अपि एवं मुक्तिप्राप्तौ न कश्चिद् दोषः संभाव्यते । अथ अस्या स्त्रीवेदपरिक्षयसामर्थ्यानुपपत्तेर्नायं दोषः, ननु तत्परिक्षयसामर्थ्याभावस्तस्याः कुतः सिद्धः? आगमात् इति चेत्, न; तस्य तथाभूतस्य द्वादशाङ्ग्यामनुपलब्धेः । तत्परिक्षयसामर्थ्यप्रतिपादकस्यापि तस्य अनुपलब्धिरिति चेत्, न;

"सव्वत्थोवा तित्थयरिसिद्धा, तित्थयरितित्थे अतित्थयरिसिद्धा असंखेज्जगुणा" [ ] इत्यादिसिद्धप्राभृतागमस्यानेकस्य सामर्थ्यवृत्त्या सीमन्तिनीनां स्त्रीवेदपरिक्षयसामर्थ्यप्रतिपादकस्य उपलम्भात् । नहि सर्वकर्मानीकनायकरूपमोहनीयकर्माङ्गभूतस्त्रीवेदपरिक्षयमन्तरेण तासां मुक्तिप्राप्तिरिति मुक्तिसद्भावावेदकमेव वचस्तासां सामर्थ्यविदकं सिद्धम । अथ स्त्रीत्वादेव न तासां तत्परिक्षयसामर्थ्यम्, न; स्त्रीत्वस्य तत्परिक्षयसामर्थ्येन विरोधासिद्धेः, न हि अविकलकारणस्य तत्परिक्षयसामर्थ्यस्य स्त्रीत्वसद्भावादभावः क्वचिदपि निश्चितः येन अग्नि–शीतयोरिव सहानवस्थानविरोधस्तयोः सिद्धो भवेत् । नापि भावाभावयोरिव अनयोरन्योन्यव्यवच्छेदरूपता अवगता येन परस्परपरिहारस्थितलक्षणविरोधसिद्धिर्भवेत् । न चाविरुद्धविधिरन्यस्याभावावेदकः अतिप्रसङ्गात् । तन्न स्त्रीत्वादपि तासां तत्परिक्षयसामर्थ्यानुपपत्तिसिद्धिः । प्रत्यक्षस्य तु इन्द्रियजस्य अतीन्द्रियपदार्थभावाभावविवेचने अनधिकार एवेति नातोऽपि तत्परिक्षयसामर्थ्यानुपपत्तिसिद्धिस्तासाम् । अतोऽनेकदोषदुष्टत्वान्न प्रकृतपक्षः साधनमर्हति । '[2]स्त्रीत्वात्' इति हेतुरपि यदि 'उदितस्त्रीवेदत्वात्' इति उपात्तस्तदाऽसिद्धः मुक्तिप्राप्तिप्राक्तनसमयादिषु स्त्रीवेदोदयस्य तासामसंभवात् अनिवृत्तिगुणस्थान एव तस्य परिक्षयात् । 'परिक्षीणस्त्रीवेदत्वात्' इति च हेतुर्विपर्ययव्याप्तत्वाद् विरुद्धः । न च 'स्त्रीत्वात्' इत्यस्य 'परिक्षीणवेदत्वात्' इत्ययमर्थः अत्रार्थे प्रकृतशब्दस्य अरूढत्वात् । अथ 'स्त्र्याकारयोगित्वात् स्त्रीत्वात्' इति हेत्वर्थस्तदा विपर्यये बाधकप्रमाणाभावात् संदिग्धविपक्षव्यावृत्तिकत्वाद् अनैकान्तिको हेतुः । चतुर्दशपूर्वसंवित्संबन्धि-

१. तु०–पृ० १३ ॥
२. तु०–पृ० ३१–३४ ॥

त्वाभावोऽपि तासां कुतः सिद्धः येन साध्यविकलो दृष्टान्तो न स्यात्? सर्वज्ञप्रणीतागमात् इति चेत्, तत एव मुक्तिभाक्त्वस्यापि तासां सिद्धिरस्तु, न हि एकवाक्यतया व्यवस्थितः दृष्टेष्टादिषु बाधामननुभवन् आप्तागमः क्वचित् प्रमाणं क्वचिन्नेति अभ्युपगन्तुं प्रेक्षापूर्वकारिणा शक्यः। [1]अथ विवादगोचरापन्नाऽवला अशेषकर्मक्षयनिवन्धनाध्यवसायविकला, अविद्यमानाऽधःसप्तमनरकप्राप्त्यविकलकारणकर्मवीजभूताध्यवसानत्वात्, यस्तु अशेपकर्मपरिक्षयनिवन्धनाध्यवसायविकलो न भवति नासौ अविद्यमानाधःसप्तमनरकप्राप्त्यविकलकारणकर्मवीजभूताध्यवसानः, यथोभयसंप्रतिपत्तिविषयः पुरुष इति वैधर्म्यदृष्टान्तः। असदेतत् यतोऽत्रापि प्रयोगे साध्यसाधनयोः प्रतिबन्धाभावान्नातो हेतोर्विवक्षितसाध्यसिद्धिः। तथाहि—यथोक्ताध्यवसानं निवर्तमानमवलातः अशेषकर्मक्षयाध्यवसायनिवर्तकं कारणं वा भवद् भवेत् व्यापकं वा? अन्यस्य निवृत्तावपि अपरनिवृत्तेरवश्यंभावाभावात्, अन्यथा अश्वनिवृत्तावपि गवादेर्नियमेन निवृत्तिप्रसक्तेः। आह च न्यायवादी—

"तस्मात् तन्मात्रसंबन्धः स्वभावो भावमेव वा।
निवर्तयेत् कारणं वा कार्यमव्यभिचारतः"॥ [प्रमाणवा० २–२३]

इति। तत्र न तावत् कारणं यथोक्ताध्यवसानमशेषकर्मक्षयाध्यवसानस्य येन तन्निवृत्त्या तस्यापि निवृत्तिः स्यात्। कारणत्वे वा यत्र अशेषकर्मक्षयाध्यवसानं योगिनि संभवति तत्र अधःसप्तमनरकपृथिवीप्राप्त्यवश्यकारणस्य वीजभूताध्यवसानसद्भावात् कार्यस्य कारणाव्यभिचारित्वात् तस्य नरकप्राप्तिसद्भाव इति अनिष्टापत्तिः। न च योगिनि अशेषकर्मक्षयनिबन्धनमध्यवसानं जनयदपि नरकप्राप्तिनिबन्धनकर्मबीजभूतमध्यवसानं नरकप्राप्तिलक्षणं स्वकार्यं न जनयतीति वाच्यम्, अविकलकारणस्य अवश्यंतया स्वकार्यनिर्वर्तकत्वात् अन्यथा अविकलकारणत्वायोगात्। न च यदेव तथाभूतकर्मनिर्वर्तनसमर्थं तदेव तत्क्षयहेत्वध्यवसायनिवन्धनं भवति, भावाभावयोरेकस्मिन्नेकदा विरोधात्, तन्निर्वर्तकस्य हेतोः स्वभावान्तरमप्राप्नुवतस्तन्निर्व(न्निव)र्तकत्वविरोधात्, न हि यदेव यदैवाङ्गुलिद्रव्यस्य ऋजुत्वोत्पादकम् तदेव तदैव तस्य विनाशकं संभवति एकनिमित्तयोरेकदा भावाभावयोर्विरोधात्। नापि तत् तस्य व्यापकम् येन ततस्तन्निवर्तमानं तदपि आदाय निवर्तेत, व्यापकत्वे वा यत्र अशेषकर्मक्षयनिबन्धनाध्यवसायसद्भावस्तत्र व्यापकस्य अवश्यंभावित्वान् अन्यथा तस्य तद्व्यापकत्वायोगात् योगिनस्तदध्यवसायवतोऽधःसप्तमनरकप्राप्तिप्रसङ्गोऽनिष्टस्तदवस्थ एव स्यात्। नच यत्र क्लिष्टतराध्यवसायसद्भावस्तत्र अतिशुभतराध्यवसायेन भाव्यमिति प्रतिबन्धसंभवः, तन्दुलमत्स्येन व्यभिचारात्। न च मनुष्यजातियोगित्वे सति अव्यभिचारः, उत्तमसंहननेन चारित्रप्राप्तिकालार्वाक्समयभाविना सर्व-

१. तु०–पृ० १५॥

पर्याप्तिसंपन्नेन तथाविधक्लिष्टपरिणामवता पुरुषेण. व्यभिचारात् । न च यत्र अतिशुभतरः परिणामस्तत्रापि अशुभतरपरिणामेन भाव्यमित्यत्रापि प्रतिबन्धः, तथाविधयोगिना व्यभिचारात् । किञ्च, स्त्रीणां सप्तमनरकपृथ्वीप्राप्तिनिबन्धनकर्मबीजाध्यवसायाभावः कुतः प्रतिपन्नः ? आप्तागमात् इति चेत्, अशेपकर्मशैलवज्राशनिभूतशुभाध्यवसायसद्भावोऽपि तत एव अभ्युपगन्तव्यः । न हि अतीन्द्रिये एवंविधेऽर्थे अस्मदादेरर्वाग्दृशः आप्तागमात् ऋते अन्यत् प्रमाणमस्ति । न च दृष्टेष्टाविरोध्याप्तवचनमसत्तर्कानुसारिजातिविकल्पैर्बाधामनुभवति तेषां प्राप्ताऽप्राप्तव्यापादकमतंगजविकल्पवद् अवस्तुसंस्पर्शित्वात् । उक्तं च भर्तृहरिणा --

"अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते" ।। [वाक्यप० १-३८]

न च अत्र वस्तुनि आगमनिरपेक्षमनुमानं प्रवर्तितुमुत्सहते, पक्षधर्मादिर्लिङ्गरूपस्य प्रमाणान्तरतः प्रतिपत्तुमशक्तेः, प्रतिपत्तौ वा साध्यस्यापि प्रतिबन्धग्राहिणा प्रमाणेन प्रतिपत्तेर्नैकान्ततोऽतीन्द्रियता भवेत् । आगमानुसारि चानुमानं प्रकृते वस्तुनि संवादकृदेव न बाधकमिति प्रदर्शितम् । न च आप्तवचनं स्त्रीनिर्वाणप्रतिपादकमप्रमाणम् सप्तमनरकप्राप्तिप्रतिषेधकं प्रमाणमिति वक्तव्यम् उभयत्र आप्तप्रणीतत्वादेः प्रामाण्यनिबन्धनस्य अविशेषात् । न च एकमाप्तप्रणीतमेव न भवति, इतरत्रापि अस्य समानत्वान् पूर्वापरोपनिबद्धाशेषदृष्टादृष्टप्रयोजनार्थप्रतिपादकाऽवान्तरवाक्यसमूहात्मकैकमहावाक्यरूपतया अर्हदागमस्य एकत्वात् तथा चान्तरवाक्यानां केषांचिद् अप्रामाण्ये सर्वस्यापि आगमस्य अप्रामाण्यप्रसक्तेः अङ्गदुष्टत्वे तदात्मकाङ्गिनोपि दुष्टत्वापत्तेः । न च प्रदर्शितवाक्यात्मकः सर्वज्ञप्रणीतागमत्वेन अस्मान् प्रति असिद्ध इति वक्तव्यम् नास्तिक-मीमांसकान् प्रति पुरुष-निर्वाणावेदकस्यापि तत्प्रणीतत्वेन असिद्धेः । या च तान् प्रति तस्य तत्प्रणीतत्वावेदिका युक्तिः सा इतरत्रापि समाना पूर्वापरैकवाक्यत्व-दृष्टादृष्टाबाधितार्थत्वादेरविशेषात् । अथ स्त्रीणां घातिकर्मक्षयनिमित्ताद्यशुक्लध्यानद्वयस्यासंभवाद् न निर्वाणप्राप्तिः संभविनी, ननु कुतस्तद्द्वयस्य तत्राभावगतिः ? पूर्वधरस्यैव तयोः सद्भावात् "आद्ये पूर्वविदः" [तत्त्वार्थ० ९-३९] इतिवचनप्रामाण्यात् । न च पूर्वधरत्वं तासां तदनधिकारित्वादिति चेत्, तर्हि प्राक्तनभवानधीतपूर्वाणां वर्तमानतीर्थाधिपत्यादीनामपि न तद् भवेत्, तदध्ययनासंभवात् आद्यशुक्लध्यानद्वयासंभवतः तन्निमित्तघातिकर्मक्षयसमुद्भूताशेषतत्त्वावबोधस्वभावकेवलज्ञानाभावे न मुक्तिश्रीसंगतिः स्यादिति अनिष्टापत्तिः । अथ शास्त्रयोगागम्यसामर्थ्ययोगावसेयभावेषु अतिसूक्ष्मेष्वपि तेषां विशिष्टक्षयोपशम-वीर्यविशेषप्रभवप्रभावयोगात् पूर्वधरस्येव बोधातिरेकसद्भावाद् आद्यशुक्लध्यानद्वयप्राप्तेः कैवल्यावाप्तिक्रमेण मुक्त्यवाप्तिरिति न दोषः तदध्ययनमन्तरेणापि विशिष्टक्षयोपशमसमुद्भूतज्ञानात् पूर्ववित्त्वसंभवात् तर्हि निर्ग्रन्थीनामपि एवं द्वितयसंभवे न कञ्चिद् दोषमुत्पश्यामः, अभ्युपगमनीयं चैतत्; अन्यथा मरुदेवीस्वामिनीप्रभृतीनां जन्मा-

न्तरेऽपि अनधीतपूर्वाणां न मुक्तिप्राप्तिर्भवेत् । न चासौ तेषामसिद्धा सिद्धप्राभृतादिग्रन्थेषु गृहिलिङ्गसिद्धानां प्रतिपादनात् । न च ते अप्रमाणम्, सर्वज्ञप्रणीतत्वेन तेषां प्रामाण्यस्य साधितत्वात् । [1]अथ मायागारवादिभूयस्त्वाद् अबलानां न मुक्तिप्राप्तिः, न; तदा तासां तद्भूयस्त्वासंभवात्, प्राक् तु पुरुषाणामपि तत्संभवोऽविरुद्धः । [2]अथ अल्पसत्त्वाः क्रुराध्यवसायाश्च ताः इति न मुक्तिभाजः, न; सत्त्वस्य कार्यगम्यत्वात्, तस्य च तासु दर्शनात् अल्पसत्त्वत्वासिद्धिः । दृश्यन्ते हि असदभियोगादौ तृणवत् ताः प्राणपरीत्यागं कुर्वाणाः परीषहोपसर्गाभिभवं चाङ्गीकृतमहाव्रता विदधानाः । क्रूराध्यवसायत्वं दृढप्रहारिप्रभृतीनां प्रागवस्थायां तद्भवे विद्यमानमपि न मुक्तिप्राप्तिप्रतिबन्धकम्, तदवस्थायां तु तस्य तास्वपि अभाव एव ।

अथ लोकवद् लोकोत्तरेऽपि धर्मे पुरुषस्य उत्तमत्वात् मुक्तिप्राप्तिः न स्त्रीणाम् [3]अनुत्तमत्वात्, न; अन्यगुणापेक्षाऽनुत्तमत्वस्य मुक्तिप्राप्त्यप्रतिबन्धकत्वात् अन्यथा तीर्थकृद्गुणापेक्षया गणधरादेरपि अनुत्तमत्वात् मुक्तिप्राप्त्यभावो भवेत् । अथ अशेषकर्मक्षयनिबन्धनस्य अध्यवसायस्य गणधरादिषु तीर्थकृदपेक्षया तुल्यत्वात् अयमदोषः, समानमेतद् अबलास्वपि तथाविधयोग्यतामापन्नासु । अथ महाव्रतस्थपुरुषावन्द्यत्वात् न तासां मुक्त्यवाप्तिस्तर्हि गणधरादेरपि अर्हदवन्द्यत्वात् न मुक्त्यवाप्तिः स्यात् । अथ

"तित्थपणामं काउं" [आवश्यकनि० समवस० गा०४५] इत्याद्यागमप्रामाण्यात् प्रथमगणधरस्य 'तीर्थ'शब्दाभिधेयत्वात् तदवन्द्यत्वं तस्यासिद्धं तर्हि चातुर्वर्ण्यश्रमणसंघस्यापि 'तीर्थशब्दवाच्यत्वान् तत्र तु तासामन्तर्भावात् महाव्रतस्थपुरुषावन्द्यत्वं तासामपि असिद्धम् । तन्न युक्त्यागमाभ्यां तासां मुक्तिप्राप्त्यभावः प्रतिपत्तुं शक्यः । तत्सद्भावस्तु प्रदर्शितागमात् युक्तितश्च प्रतीयत एव, तथाहि — विमत्यधिकरणभावापन्नाः स्त्रियो मुक्तिभाजः, अवाप्ताशेषकर्मक्षयनिबन्धनाध्यवसायत्वात्, उभयाभिमतगणधरादिपुरुषवत्, इत्याद्यागम-युक्तिगर्भमनुमानं निर्दोषं युक्तिशब्दवाच्यं समस्त्येव ।'–पृ० ७५१–७५४ [गुजरात विद्यापीठ प्रकाशित] ॥

वादिवेताल श्री **शान्तिसूरिविरचितायाम् उत्तराध्ययनसूत्र**[३६-४९]वृहद्वृत्तौ

स्त्रीनिर्वाणसम्बन्धिनी चर्चा –

"[4]इह च ये स्त्रीनिर्वाणं प्रति विप्रतिपद्यन्ते त एवं वाच्याः – इह खलु यस्य यत्रासम्भवो न तस्य तत्र कारणावैकल्यम्, यथा सिद्धशिलायां शाल्यङ्कुरस्य, अस्ति च तथाविध-

१. तु० – पृ० २७ ॥
२. तु० – पृ० २८, १८ ॥
३. तु० – पृ० २५–२६ ॥
४. तुलना – पृ० १३ ॥

स्त्रीषु मुक्तेः कारणावैकल्यम् । न चायमसिद्धो हेतुः, यतोऽस्यासिद्धत्वं किं स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वेन, आहोस्विन्निर्वाणस्थानाद्यप्रसिद्धत्वेन, निर्वाणसाधकप्रमाणाभावेन वा ? तत्र यदि तावत् पुरुषेभ्योऽपकृष्यमाणत्वेन तदा तत् किं सम्यग्दर्शनादिरत्नत्रयाभावेन, विशिष्ट–सामर्थ्यासत्त्वेन, पुरुषानभिवन्द्यत्वेन, स्मारणाद्यकर्तृत्वेन, अमहर्द्धिकत्वेन, मायादिप्रकर्षवत्त्वेन वेति विकल्पाः । तत्र न तावत् सम्यग्दर्शनादिरत्नत्रयस्याभावेन, यतस्तस्यासौ किमविशिष्टस्य प्रकर्षपर्यन्तप्राप्तस्य वा ?, यद्यविशिष्टस्य तदा किमियं चारित्रस्यासम्भवेन उत ज्ञानदर्शनयोः, त्रयाणां वा ? यदि चारित्रस्यासम्भवेन तदा सोऽपि किं सचेलत्वेन, स्त्रीत्वस्य चारित्रविरोधित्वेन, मन्दसत्त्वतया वा ?, यदि सचेलत्वेन तदा चेलस्यापि चारित्राभावहेतुत्वं परिभोगमात्रेण, परिग्रहरूपत्वेन वा ? यदि परिभोगमात्रेण तदा तत्परिभोगोऽपि तासां तत्परित्यागाशक्तत्वेन गुरूपदिष्टत्वेन वा ? [1]न तावत् तत्परित्यागाशक्तत्वेन, यतः प्राणेभ्यो नापरं प्रियम्, अथ च तानपि त्यजन्त्य एता दृश्यन्ते । [2]अथ गुरूपदिष्टत्वेन तथा सति गुरूणामपि चारित्रोपकारित्वेन तासां तदुपदेशः अन्यथा वा ? यदि चारित्रोपकारित्वेन किं न पुरुषाणामपि ? अथाबला एवैता बलादपि पुरुषैः परिभुज्यन्त इति तद्विना तासां चारित्रबाधासम्भवो न पुरुषाणामिति न तेषां तदुपदेशः, उक्तं च –

"वस्त्रं विना न चरणं तासामित्यर्हतौच्यत, विनापि ।
पुंसामिति न्यवार्यत" [[3]स्त्रीनिर्वाण० २२] इति ।

एवं सति न चेलाच्चारित्राभावः तदुपकारित्वात्तस्य । तथाहि यद् यस्योपकारि न तत् तस्याभावहेतुः, यथा घटस्य मृत्पिण्डादि, उपकारि चोक्तनीत्या चारित्रस्य चेलम् । अथान्यथेति पक्षः, अयमपि न क्षमो, यतोऽसौ चेलस्य चारित्रं प्रत्यौदासीन्येन बाधकतया वा ? न चेदमस्मिन्नुभयमप्यस्ति, पुरुषाभिभवरक्षकत्वेन तस्य तासु तदुपकारितया अनन्तरमेवोक्तत्वात् । नापि चेलस्य परिग्रहरूपत्वेन चारित्राभावहेतुत्वम्, यतो मूर्छैव परिग्रह इतीहैव परीषहाध्ययने निर्णीतम्, यदि च चेलस्य परिग्रहरूपता तदा तथाविधरोगोपसर्गादिषु पुरुषाणामपि चेलसम्भवे चारित्राभावेन मुक्त्यभावः स्यात् । उक्तं च –

"अर्शोभगन्दरादिषु गृहीतचीरो यतिर्न मुच्येत ।
उपसर्गे वा चीरे" [[4]स्त्रीनिर्वाण० २३] इत्यादि ।

---

१. तु० –पृ० १८॥

२. तु० –पृ० १८॥

३. पृ० २२॥

४. पृ० २२॥

किञ्च, चेलस्य परिग्रहरूपत्वे

[१] "आमे तालपलंवे भिन्ने अभिन्ने वा णो कप्पइ णिग्गंथीणं परिग्गहित्तए वा"

[बृहत्कल्पे उ. १ सू. १]

इत्यादि निर्ग्रन्थ्या व्यपदेशश्चागमे न श्रूयेत । अतो न सचेलत्वेन चारित्रासम्भवः ।

नापि स्त्रीत्वस्य चारित्रविरोधित्वेन । यतो यदि स्त्रीत्वस्य चारित्रविरोधः स्यात् तदाऽविशेषेणैव तासां प्रव्रजनं निषिध्येत, न तु विशेषेण, यथोच्यते –

[२] "गब्भिणी बालवच्छा य पव्वावेउं न कप्पइ ।" [निशीथभाष्ये ३५०८] त्ति ।

नापि मन्दसत्त्वतया, यतः सत्त्वमिह व्रततपोधारणविषयमेषितव्यम्, अन्यस्यानुपयोगित्वात्, तच्च तास्वप्यनल्पं सुदुर्धरशीलवतीषु संभवति, उक्तं च –

"ब्राह्मी सुन्दर्यार्या राजीमती चन्दना गणधराद्याः ।
अपि देव-मनुजमहिता विख्याताः शीलसत्त्वाभ्याम् ॥" [[३]स्त्रीनिर्वाण० ३६]

अतो न चारित्रासम्भवेन विशिष्टरत्नत्रयस्याभावः । इत्थं च चारित्रसम्भवे सिद्ध एव ज्ञानदर्शनसम्भवः, तत्पूर्वकत्वात्तस्य । उक्तं हि –

"पूर्वद्वयलाभः पुनरुत्तरलाभे भवति सिद्धः ।" [प्रशम० २३१]

इति तदभावपक्षोऽपि नाश्रयणीयः । त्रयाभावपक्षस्त्वेवं त्रितयसिद्धावनवसर एव । दृश्यन्ते च सम्प्रत्यपि त्रितयमभ्यस्यन्त्यस्ताः, उक्तं च –

"जानीते जिनवचनं श्रद्धत्ते चरति चार्यिकाऽशबलम् ।" [[४]स्त्रीनिर्वाण० ४]

अथ प्रकर्षपर्यन्तप्राप्तस्याभावः, एवं तर्हि तस्याप्यभावः किं कारणाभावेन विरोधिसम्भवेन वा ?, न तावत्कारणाभावेन, अविशिष्टरत्नत्रयाभ्यासस्यैव तन्निबन्धनत्वेनागमेऽभिधानात्, तस्य च स्त्रीष्वनन्तरमेव समर्थितत्वात् । नापि विरोधिसम्भवेन, तस्यास्मादृशामत्यन्तपरोक्षत्वेन केनचिद् विरोधानिर्णायादिति न रत्नत्रयाभावेन स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वम् ।

अथ विशिष्टसामर्थ्यासत्त्वेन, इदमपि कथमिति वाच्यम् ?, किं तावद् [५]असप्तमनरकपृथ्वीगमनत्वेन, आहोस्विद् वादादिलब्धिरहितत्वेन, अल्पश्रुतत्वेन, अनुपस्थाप्यतापाराञ्चितकशून्यत्वेन वा ? तत्र न तावदसप्तमनरकपृथ्वीगमनत्वेन, यतोऽत्र किं सप्तमनरकपृथ्वीगमनाभावो

---

१. तु० – पृ० १९ ॥
२. तु० – पृ० १७ ॥
३. पृ० २८ ॥
४. पृ० १४ ॥
५. तु० – पृ० १५ ॥

यत्रैव जन्मनि तासां मुक्तिगामित्वं तत्रैवोच्येत सामान्येन वा ? तत्र यद्याद्यो विकल्पस्तदा पुरुषाणामपि यत्र जन्मनि मुक्तिगामिता न तत्रैव सप्तमपृथ्वीगमनमिति तेषामपि मुक्त्यभावप्रसङ्गः । अथ सामान्येन, अत्र चायमाशयो यथा –

"छट्ठिं च इत्थियाओ मच्छा मणुया य सत्तमीं पुढवीं ।" [[1]बृहत्सं० ]

इत्यागमवचनात् पुरुषाणामेव सप्तमनरकपृथ्वीगमनयोग्यकर्मोपार्जनसामर्थ्यं न स्त्रीणामित्यधोगतौ पुरुषतुल्यसामर्थ्याभावादूर्ध्वगतावपि तासां तदभावोऽनुमीयते, ततस्तासां पुरुषेभ्योऽपकृष्यमाणतेति । तदप्ययुक्तम्, यतो येषामधोगतौ तुल्यसामर्थ्याभावस्तेषामूर्ध्वगतावप्यनेन भाव्यमिति न नियमोऽस्ति, तथाहि –

"[2]संमुच्छिम-भुयग-खग-चउप्पय-सप्पि-त्थि-जलचरेहिंतो ।
सनरेहिंतो सत्तसु कमोववज्जंति नरएसु ।।" [ ]

इति वचनाद्भुजग-चतुष्पत्-सर्प-खग-जलचर-नराणामधोगतावतुल्यं सामर्थ्यमूर्ध्वगतौ तु –

[3]"सन्नितिरिक्खेहिंतो सहस्सारंतिएसु देवेसु ।
उप्पज्जंति परेसु वि सव्वेसु वि माणुसेहिंतो ।।" [ ]

इति वचनादेषामासहस्त्रारान्तोपपातात्तुल्यमेव सामर्थ्यम्, उक्तं च –

"विषमगतयोऽप्यधस्तादुपरिष्टात् तुल्यमासहस्रारम् ।
गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतुः ।।" [[4]स्त्रीनिर्वाण० ६ ]

अतो नासप्तमनरकपृथ्वीगमनत्वेन विशिष्टसामर्थ्यासत्त्वम् ।

अथ वादादिलब्धिरहितत्वेन, तदप्यचारु, यतो यदि वादादिलब्धिमत्त्वेन विशिष्टसामर्थ्यं व्याप्तमुपलब्धं भवेत् ततस्तन्निवृत्तौ तस्य निवृत्तिः स्यात्, न चैवम्, अनयोर्व्याप्यव्यापकभावस्य क्वचिदनिश्चयात् । अल्पश्रुतत्वं तु मुक्त्यवाप्त्याऽनुमितविशिष्टसामर्थ्यै**र्माषतुषा**दिभिरनैकान्तिकमित्यनुद्घोष्यमेव । यदप्यनुपस्थाप्यतापाराञ्चितकशून्यत्वेनेत्युच्यते, तदप्ययुक्तम्, यतो न तन्निषेधाद् विशिष्टसामर्थ्याभावः प्रतीयते, योग्यतापेक्षो हि चित्रः शास्त्रे विशुद्ध्युपदेशः, यदुक्तम् –

---

१. "असन्नी खलु पढमं दुच्चं च सरिसवा तइय पक्खी । सीहा जंति चउत्थिं उरगा पुण पंचमिं पुढविं ।।२८४ ।। छट्ठिं च इत्थियाओ मच्छा मणुया य सत्तमिं पुढविं । एसो परमुववाओ वोधव्वो नरयपुढवीसु ।।२८५।। "–बृहत्सं० ।।

२. तु० – पृ० १५ ।।

३. तु० – पृ० १६ ।।

४. पृ० १५ ।।

"संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे ।
रोगचिकित्साविधिरिव कस्यापि कथञ्चिदुपकारी ।।" [[१]स्त्रीनिर्वाण० २६]

[२]यच्च पुरुषानभिवन्द्यत्वं हेतुरुक्तः तदपि सामान्येन गुणाधिकपुरुषापेक्षं वा ?, यदि सामान्येन तदाऽसिद्धतादोषः, तीर्थकरजनन्यादयो हि शक्रादिभिरपि प्रणताः किमङ्ग शेषपुरुषैः ? गुणाधिकपुरुषापेक्षं चेद् गणधरा अपि तीर्थकृद्भिर्नाभिवन्द्यत इति तेषामप्यपकृष्यमाणत्वम् । अथ तीर्थशब्दस्य आद्यगणधराभिधायित्वात् तीर्थप्रणामपूर्वकत्वाच्चार्हद्देशनाया असिद्धमेव तदनभिवन्द्यत्वं गणधराणाम्, एवं तर्हि चातुर्वर्णसङ्घस्यापि तदभिधेयत्वात् तदन्तर्भावाच्च स्त्रीणामर्हद्भिरपि वन्द्यत्वे कथं पुरुषानभिवन्द्यत्वेन तासां तेभ्योऽपकृष्यमाणत्वम् ?

[३]अथ स्मारणाद्यकर्तृत्वेन, एवं सति समानेऽपि रत्नत्रये शिष्याचार्ययोराचार्यस्यैव मुक्तिः स्यात्, न शिष्यस्य, स्मारणाद्यकर्तृत्वेन तस्य ततोऽपकृष्यमाणत्वात् । न चैतदागमिकम्, **चण्डरुद्रा**द्याचार्यशिष्याणामागमे निःश्रेयसश्रवणात् ।

[४]अथामहर्द्धिकत्वेन स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वं, तथा सति प्रष्टव्योऽसि – किमाध्यात्मिकीमृद्धिमाश्रित्य बाह्यां वा ? तत्र न तावदाध्यात्मिकीम्, उक्तन्यायतो रत्नत्रयस्य तासां समर्थितत्वात् । नापि बाह्याम्, एवं हि महत्यास्तीर्थकरादिलक्ष्म्या गणधरादयश्चक्रधरादिलक्ष्म्याश्चेतरेऽक्षत्रियादयो न भाजनमिति तेषामप्यमहर्द्धिकत्वेनापकृष्यमाणत्वाद् मुक्तिकारणवैकल्यप्रसङ्गः ।

[५]यदपि 'मायादिप्रकर्षवत्वेन' इत्युच्यते तदप्यसत्, तस्योभयोरपि तुल्यत्वेन दर्शनादागमे च श्रवणात्, श्रूयते हि चरमशरीरिणामपि नारदादीनां मायादिप्रकर्षवत्त्वम् । अतो न तासां पुरुषेभ्योऽपकृष्यमाणत्वेन कारणावैकल्यस्य हेतोरसिद्धता ।

[६]यदपि 'निर्वाणस्थानाद्यप्रसिद्धत्वेन' इत्युक्तं तदप्यसाधकम्, यतो न निर्वाणस्थानादिप्रसिद्धिः कारणावैकल्यस्य कारणं व्यापकं वा येन तन्निवृत्तौ तस्य निवृत्तिः । अथाऽऽत्थ यदि स्त्रीणां मुक्तिकारणावैकल्यमभविष्यत् मुक्तिरप्युदपत्स्यत, तथा च तत्स्थानादिप्रसिद्धिरपीति, नैवम्, तत्स्थानादिप्रसिद्धिं प्रति मुक्तेरव्यभिचारित्वाभावात्, अन्यथा हि पुरुषाणामपि येषां मुक्तिस्थानाद्यप्रसिद्धिस्तेषां तदभावप्रसङ्गः ।

---

१. पृ० २४ ।।
२. तु० – पृ० २५–२६ ।।
३. तु० – पृ० २६ ।।
४. तु० – पृ० २६ ।।
५. तु० – पृ० ५७ ।।
६. तु० – पृ० २७–२८ ।।

अथैतत्साधकप्रमाणाभावेन प्रकृतहेतोरसिद्धता, तत्रापि तत्साधकप्रमाणस्य किं प्रत्यक्षस्यानुमानस्यागमस्य वा ? तत्र यदि प्रत्यक्षस्य तदा किं स्वसम्बन्धिनः सर्वसम्बन्धिनो वा ? स्वसम्बन्धिनोऽपि किं वाह्यं यद्यथोदितप्रत्युपेक्षणादिरूपं कारणावैकल्यं तद्विषयस्य यदिवाऽऽन्तरं यच्चारित्रादिपरिणामात्मकं तग्दोचरस्य ? न तावदाद्यस्य, स्त्रीष्वपि यथोदितप्रत्युपेक्षणादेरक्षूणविधानस्येक्षणात् । अथ द्वितीयस्य, तदा तदभावस्यार्वाग्दृशां पुरुषेष्वपि समानत्वात् तेषामपि कारणावैकल्यस्यासिद्धिप्रसङ्गः, सर्वसम्बन्धिनस्तु प्रत्यक्षस्यासर्वविदा सत्त्वेनासत्त्वेन [वा] क्वचिन्निश्चेतुमशक्यत्वात् तदभावेन प्रकृतहेतोरसिद्धतेत्यनुद्घोष्यमेव । अथानुमानस्य, तदप्यसत्, तदभावस्य पुरुषेष्वपि समानत्वात्, न ह्यर्वाग्दृशां स्त्रीषु पुरुषेपु वा तत्त्वतस्तदव्यभिचारि लिङ्गमस्ति येनानुमानं स्यात् । अथास्त्येव पुरुषेष्वनुमानं, तथाहि – यदुत्कर्षापकर्षाभ्यां यस्यापकर्षोत्कर्षौ तस्यात्यन्तापकर्पे तदत्यन्तोत्कर्षवद्दृष्टं, यथाऽभ्रपटलापगमे सवितृप्रकाशः, रागाद्युत्कर्षापकर्पाभ्यामपकर्षोत्कर्षवच्च चारित्रादि, न च रागाद्यपचयप्रकर्षस्यासम्भवो यतो यत्प्रकृष्यमाणहानिकं तत्क्वचित्सम्भविहानिप्रकर्षनिष्ठमपि दृष्टं, यथा हेमनि कालिकाकिट्टादि, प्रकृष्यमाणहानयश्च रागादयः, तथैव तेपां प्राणिपु प्रतीतत्वात्, नन्वेतत् स्त्रीष्वपि समानमिति । नाप्यागमस्य, तस्य प्रस्तुतस्यापि साक्षात् स्त्रीनिर्वाणाभिधायित्वेनार्थतस्तत्कारणावैकल्यसाधकत्वात् ।

न च [1]स्त्रीशब्दस्यान्यार्थत्वं परिकल्पनीयम् । तद्धि लोकरूढितः, आगमपरिभाषातो वा भवेत् ? न तावल्लोकरूढितः, लोके हि यस्मिन्नर्थे यः शब्दोऽन्वयव्यतिरेकाभ्यां वाचकत्वेन दृश्यते स तस्यार्थो यथा गवादिशब्दानां सास्नादिमदादयः, न च स्त्रीशब्दस्य स्तनादिमदाकारमर्थमन्तरेणान्यस्यान्वयव्यतिरेकाभ्यां वाच्यत्वेन प्रतीतिरस्ति, उक्तं च –

"स्तन-जघनादिव्यङ्ग्ये स्त्रीशब्दोऽर्थे न तं विहायैषः ।
दृष्टः क्वचिदन्यत्र त्वग्निर्माणवकवद् गौणः ।। [[2]स्त्रीनिर्वाण० ४५] इति ।

नाप्यागमपरिभाषातः, यतो नागमे क्वचित् स्त्रीशब्दस्य परिभाषितोऽर्थो यथा [3]व्याकरणे "वृद्धिरादैच्" [पा. १–१–१] इति वृद्धिशब्दस्यादैचौ । दृश्यते चागमेऽपि लोकरूढ एवार्थे स्त्रीशब्दः "[4]इत्थीओ जंति छड्ढिं" [ ] इत्यादौ । न च तत्राप्यर्थान्तरपरिकल्पना, वाधकं विना तदनुपपत्तेः,

उक्तं च —

१. तु० – पृ० ३०–३१ ।।
२. पृ० ३२ ।।
३. तु० – पृ० ३२ ।।
४. तु० – पृ० ३३ ।।

"परिभाषितो न शास्त्रे मनुजीशब्दोऽथ लौकिकोऽधिगतः ।
अस्ति च न तत्र बाधा स्त्रीनिर्वाणं ततो न कुतः ॥" [[1]स्त्रीनिर्वाण० ४५]

अथ दृष्ट एवागमे पुरुषाभिलाषात्मनि वेदाख्ये भावे स्त्रीशब्दः, इदमपि कुतो निश्चितम्? किं तावत् 'स्त्रीशब्दः' इतिशब्दश्रवणमात्रात् स्त्रीत्वस्य पल्यशतपृथक्त्वावस्थानाभिधानतो वा? न तावत् स्त्रीवेद इति श्रवणमात्रत इति युक्तम्, यदीह स्त्री चासौ वेदश्च स्त्रीवेद इति समानाधिकरणसमासो भवेत् तदा स्त्रीशब्दस्यार्थान्तरे वृत्तिर्भवेत्, तत्सद्भावश्च बाधकाभावेन कल्प्येत समासान्तराभावेन वा? न तावद् बाधकाभावेन, तत्र हि स्त्रीशब्दस्य पुरुषाभिलाषात्मको भाव एवार्थो भवेत्, तथा च स्त्रीनिर्वाणसूत्रे किं स एव साक्षादर्थस्तदुपलक्षितं वा शरीरं? यदि स एव, तदा किं तदैव तद्भावो विवक्ष्यते [2]भूतपूर्वगत्या वा? तत्र यदि तदैव, तदा निर्वाणावस्थायामपि वेदसम्भवः । न चैतदागमिकम् । अथ भूतपूर्वगत्या, तदा देवादीनामपि निर्वाणप्राप्तिः, तथा च "[3]सुरणारएसु चत्तारि होंति" [पंचसं० ४–१०] इत्याद्यागमविरोधः, तेष्वपि भूतपूर्वगत्या चतुर्दशगुणस्थानसम्भवात् । अथ तदुपलक्षितं [वा] पुरुषशरीरम्, तदाऽसौ तदुपलक्षणं तत्र नियतवृत्तिरनियतवृत्तिर्वा? यदि नियतवृत्तिस्तदाऽऽगमविरोधः, परिवर्तमानतयैव पुरुषशरीरे वेदोदयस्य तत्राभिधानात्, न चानुभवोऽप्येवमस्ति । अथानियतवृत्तिः, कथमसौ तदुपलक्षणम्? अथैवंरूपमपि गृहादिषु काकाद्युपलक्षणमीक्ष्यत इत्यत्रापि तथोच्यते, एवं सति स्त्रीशरीरेऽपि कदाचित् पुरुषवेदस्योदयसम्भवात् स्त्रीणामपि निर्वाणापत्तिः, यथा हि पुरुषाणां भावतः स्त्रीत्वमेवं स्त्रीणामपि [4]भावतः पुरुषत्वसम्भवोऽस्ति, भाव एव च मुख्यं मुक्तिकारणम्, तथा च यद्यप्रकृष्टेनापि स्त्रीत्वेन पुरुषाणां निर्वाणमेवमुत्कृष्टेन भावपुरुषत्वेन स्त्रीणामपि किं न निर्णाणम्? इति ।

न च समासान्तरासम्भवेन स्त्रीवेद इत्यत्र समानाधिकरणसमासकल्पनम्, स्त्रिया वेदः स्त्रीवेद इति षष्ठीसमासस्यापि सम्भवात् । न चास्य स्त्रीशरीर-पुरुषाभिलाषात्मकवेदयोः सम्बन्धाभावेनायुक्तत्वमिति वाच्यम्, यतस्तयोः सम्बन्धाभावः किं भिन्नकर्मोदयरूपत्वेन, पुरुषवत् स्त्रिया अपि स्त्रियां प्रवृत्तिदर्शनेन वा? न तावद् भिन्नकर्मोदयरूपत्वेन, भिन्नकर्मोदयरूपाणामपि [5]पञ्चेन्द्रियजात्यादीनां देवगत्यादीनां च सदा सम्बन्धदर्शनात् । नापि पुरुषवत् स्त्रिया अपि स्त्रियां प्रवृत्तिदर्शनेन, इयं हि पुरुषाप्राप्तौ स्ववेदोदयादपि संभवत्येव, उक्तं च –

१. पृ० ३३॥
२. तु०–पृ० ३४॥
३. पृ० १४ टि० २॥
४. तु०–पृ० ३४॥
५. तु०–पृ० ३७॥

"सा स्वकवेदात् तिर्यग्वदलाभे मत्तकामिन्या: ।" [[1]स्त्रीनिर्वाण० ५५] इति ।

अथ स्त्रीत्वस्य पल्यशतपृथक्त्वावस्थानाभिधानाभिधानादेवमुच्यते, इदमपि न सुन्दरम्, तत्र [2]स्त्रीत्वानुबन्धस्य विवक्षितत्वात्, संभवति हि स्त्र्याकारविच्छिदेऽपि तत्कारणकर्मोदयाविच्छेद:, तदविच्छेदाच्च पुंस्त्वाद्यव्यवधानेन पुन: स्त्रीशरीरग्रहणमिति ।

किञ्च, "[3]मणुयगईए चउदस गुणठाणाणि होंति" [ ]. तथा "पंचिंदिएसु गुणठाणाणि हुंति चउदस" [ ] तथा "चउदस तसेसु गुणठाणाणि हुंति" [ ] तथा "भवसिद्धिगा व सव्वट्ठाणेसु होंति" [ ] इत्यादि स्त्रीशब्दरहितमपि प्रवचनं स्त्रीनिर्वाणे प्रमाणमस्ति, स्त्रीणामपि पुंवद् मनुष्यगत्यादिधर्मयोगात् । अथ सामान्यविषयत्वान्नेदं स्त्रीविशेषे प्रमाणम्, एवं सति पुरुषाणामपि विशेषरूपताऽस्ति न वा ? न तावन्नास्ति, मनुष्यगतिविशेषरूपत्वात्तेषाम् । अथास्ति विशेषरूपता, तथा सति तेष्वपि कथमेतत्प्रमाणम् ? यथा च तेषु प्रमाणं तथा किं न स्त्रीष्वपीति ? अथ पुरुषेष्वेव तदर्थवदिति स्त्रीषु तस्याप्रवृत्ति:, एवं सति किं न विपर्ययकल्पनापि ? न चैवमपर्याप्तकमनुष्यादीनां देवनारकतिरश्चां च निर्वाणप्रसङ्ग:, तेषामेतद्वाक्याविषयत्वात् । एतदविषयत्वं चापवादविषयत्वात् । उक्तं हि — "अपवादविषयं परिहृत्य उत्सर्ग: प्रवर्तते" [ ] इति । अपवादश्च [4]"मिच्छादिट्ठी अपज्जत्तगे" [ ] तथा "सुरनारएसु होंति चत्तारि तिरिएसु जाण पंचेव ।" [पंचसं० ४-१०] इत्यादिरागम: । आह च—

"मनुजगतौ सन्ति गुणाश्चतुर्दशेत्याद्यपि प्रमाणं स्यात् ।

पुंवत् स्त्रीणां सिद्धौ नापर्याप्तादिवद् बाधा ।।" [[5]स्त्रीनिर्वाण० ५६] इति कृतं विस्तरेण ।" —पृ० ६७८-६८३ [आगमोदय-समिति प्रकाशित] ।।

**श्रीशान्तिसूरिविरचितायां न्यायावतारवार्तिकवृत्तौ** विद्यमाना स्त्रीनिर्वाणसम्बन्धिनी चर्चा —

"ते [दिगम्बरा] अपि स्त्रीणाममोक्षमनागममभ्युपेता: ......... ।

तथाहि — यथा तिर्यग्नारकामरासंख्यायु:सम्मूर्च्छजनरेषु रत्नत्रयस्य निर्वाणहेतोरभावोऽभिहितोऽर्हता तथा न योषासु तथापि ते तत्र तदभावं प्रतिपन्ना इति । नापि प्रत्यक्षेण रत्न-

---

१. पृ० ३७ ।।
२. तु० —पृ० ३३ ।।
३. तु० —पृ० ३८ ।।
४. पृ० ३८ ।।
५. पृ० ३८ ।।

त्रयस्याभावः, परचेतोवृत्तीनां दुरन्वयत्वात् । नाप्यनुमानेन, प्रत्यक्षाभावे तस्याप्यभावात् । तदेवं प्रत्यक्षानुमानागमाबाधितं ज्ञानदर्शनचारित्रलक्षणं रत्नत्रयमविकलं कारणं निर्वाणस्य स्त्रीष्वस्तीति कथमनिर्मोक्ष इति । प्रयोगः – [1]यदविकलं कारणं तदवश्यमेव कार्यमुत्पादयति यथा अन्त्या बीजादिसामग्री अङ्कुरादिकम् । अविकलं च निःश्रेयसकारणं योपित्स्विति ।

[2]अथाधस्तादुत्कृष्टगमनवद् उपरिष्टादप्युत्कृष्टगमनासंभवः तासामिति स्त्रीत्वेनैव विरुद्धं रत्नत्रयमित्यसिद्धो हेतुरिति चेत्; न, प्रतिबन्धाभावात् । न हि सप्तमपृथ्वीगमनाभावो मोक्षाभावेन व्याप्तो विपर्यये व्याप्तेरसिद्धेः । इह यद्यत्र नियम्यते तद्विपर्ययेण तद्विपक्षस्य व्याप्तौ नियमः सिध्यति, यथा वह्निना धूमस्य व्याप्तौ धूमाभावेन वह्न्यभावस्य व्याप्तिः । यथा वा शिंशपात्वस्य वृक्षत्वेन व्याप्तौ वृक्षत्वाभावस्य शिंशपात्वाभावेन व्याप्तिरिति । न चैवं सप्तमपृथ्वीगमनं कारणं मोक्षगमनस्य, नापि तदात्मकम् येन विपर्ययव्याप्तिः स्यादिति । न चाव्यापकनिवृत्तावपि व्याप्यस्य निवृत्तिरतिप्रसंगात् । न च स्त्रीत्वेनाविकलकारणं भवन्निर्वाणकारणं निवर्त्यमानमुपलब्धम्, येन विरोधादसिद्धो हेतुः स्यादिति ।

न चोत्कृष्टाशुभपरिणामेन उत्कृष्टशुभपरिणामस्य व्याप्तिः येन तदभावे तस्याप्यभावतः प्रकृष्टाशुभार्जनायोग्यत्वे प्रकृष्टशुभार्जनायोग्यत्वं तासां स्यादिति । उक्तं च ।

"विषमगतयोप्यधस्तात् उपरिष्टात्तुल्यमासहस्रारम् ।
गछन्ति च तिर्यञ्चस्तदधोगतिन्यूनताऽहेतुः ॥" [ [3]स्त्रीनिर्वाण० ६ ]
[4]"श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥" [ तत्त्वार्थसं० का० २७ ]

इति वचनात् नोत्कृष्टश्रुताभावेन सिद्ध्यभावः स्त्रीणामिति ।

न च वस्त्रेण व्यवधानं निर्वाणस्य, अन्यथा तद्रहितानां तस्य सत्त्वं स्यात् । मोहयुक्तत्वात् [न] इति चेत्; स एव तर्हि परिग्रहोऽस्तु न वस्त्रादिरिति । अन्यथा "कप्पइ निग्गंथाणं निग्गंथीणं समणीणं" [5]ति व्यपदेशो न स्यात् । तेन मूर्च्छां परिग्रहं वर्णयन्ति नोपकरणम् । तेन पुंसामपि वस्त्रपात्रादि धर्मोपकरणं न परिग्रह इति । तदुक्तम् –

"यत् संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोन्यदधिकरणमाहार्हन् ॥" [ [6]स्त्रीनिर्वाण० १२ ]

---

१. तु० – पृ० १३ ॥
२. तु० – पृ० १५ ॥
३. पृ० १५ ॥
४. पृ० १६ ॥
५. तु० – पृ० १९ ॥
६. पृ० १९

अपि च संसारस्य कि कारणं वस्त्रादिः, किं वा रागादिरिति? यदि वस्त्रादिः, तदा तद्रहितानां मोक्षः स्यात् । अथ रागादिः, तदा तद्विपक्षसेवया रागादिक्षयो न वस्त्रादित्यागेन । अथ वस्त्रादिधावनादौ हिंसा भवति, सा च संसारकारणमिति । तन्न, अप्रमत्तस्य हिंसायामपि वन्धाभावात् । तदुक्तम् –

[१] "जियउ य मरउ य जीवो अजयाचारिस्स निच्छओ बन्धो ॥
पययस्स नत्थि बन्धो हिंसामेत्तेण दोसेण ॥" [प्रवच० ३.१७]

"उच्चालियम्मि पाए इरियासमियस्स वट्टमाणस्स ।
वावज्जेज्ज कुलिंगी मरेज्ज तं जोगमासज्ज ॥
न हु तस्य तण्णिमित्तो बन्धो सुहुमो वि देसिओ समए ॥" [ओघ० ७४८-७४९]

तस्मात् प्रमादादिरेव हिंसा न वस्त्रादिधर्मोपकरणग्रहणमिति ।

[२]अवन्द्या स्त्रियः । तेन न निर्वान्तीति चेत्, ननु कस्यावन्द्या ? । किं सर्वस्य, किं वा एकस्य कस्यचिदिति ? । न तावत् प्रथमः पक्षः चक्रवर्त्यादिभिर्वन्द्यत्वात् । द्वितीयपक्षे तु गणधरादीनामप्यनिर्मोक्षत्वप्रसंगः । तेऽपि हि नार्हता वन्द्यन्ते । अथ महत्त्वे सत्यवन्द्यत्वात् इत्युच्यते । तथाहि–महतीभिरपि दिनदीक्षितो वन्द्यते । न पुनस्तास्तेनेति । नैतदस्ति । महत्त्वामहत्त्वव्यवस्थितेरागमनिवन्धनत्वात् । 'धर्मस्य पुरुषप्रधानत्वात् तेन पुरुषस्य महत्त्वं न स्त्रीणाम्' इति आगमः ।

[३]अतिसंक्लिष्टकर्मत्वादिति चेत् । न, कर्मलाघवस्य सम्यक्त्वादिप्राप्तौ तुल्यत्वात्

[४]मायाप्रधानत्वात् सत्यरहितत्वात् इत्यपि न वक्तव्यम् । यतः–

"शीलाम्बुरोधवेलाः गुणरत्नसमुज्ज्वलाः अतिस्वच्छाः ।
राज्यमपहाय साध्व्यः संजाताः सत्यभामाद्याः ॥"

"गार्हस्थ्येऽपि सुसत्त्वाः विख्याताः शीलवत्तया जगति ।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ? ॥" [[५]स्त्रीनिर्वाण० ३७]

अपि च यदि न स्त्रीणां मोक्षोऽस्ति तदाऽयमागमः कथम् ?

---

१. तु० – पृ० २० ॥
२. तु० – पृ० २५ ॥
३. तु० – पृ० २९ ॥
४. तु० – पृ० २७ ॥
५. पृ० २८ ॥

[1]"अट्ठसयमेगसमए पुरिसाणं निव्वुई समक्खाया ।
थीलिंगेण च वीसं सेसा दसगं तु बोद्धव्वा ॥" [ ]

[2]औपचारिकत्वादस्येति चेत् – पुरुषस्यापि स्त्रीवेदोदये सति स्त्रीवद् व्यवहृतिर्यथा लोके पुरुषकार्याकरणात् पुरुषोऽपि स्त्रीति व्यवह्रियते । तदसत् । मुख्ये बाधकाभावात् । अन्यथा सर्वशब्दानां व्यवस्था विलुप्येत । किं च, आप्ता अप्यौपचारिकशब्दैर्यदि वस्तु प्रतिपादयेयुः तदाऽऽप्तता हीयेत । प्रयोजनं चोपचारस्य न किंचिदस्ति । वेदोदये तत्संभवप्रतिपादनं प्रयोजनमिति चेत् । न, क्षीणवेदस्यैव निवार्णप्राप्तेः । न च स्त्रीवेदोदये सति क्षपकश्रेण्या-रम्भकत्वं येन तथा व्यपदेशः स्यात् । न हि दोषवन्तो गुणश्रेणिमारभन्ते । अथ कदाचित् तस्य स्त्रीवेदोदय आसीत् तेन तथा व्यपदेशः; [3]तर्हि क्रोधाद्युदयोऽपि कदाचित् आसीत्, तेन किन्न व्यपदिश्यन्ते 'क्रोधवन्तः इयन्तः सिध्यन्ति' इति । तस्मात् औपचारिकत्वमागमस्य प्रतिपद्यमानो विधिवाक्यस्यैव प्रामाण्यमिच्छतो मीमांसकस्यानुहरति ।

अपि च [4]चतुर्दशगुणस्थानानि स्त्रीणामर्हतोक्तानि निर्मोक्षत्वे विरुध्यन्ते ॥" – पृ० १२०-१२२ [सिंघी जैन ग्रंथमाला प्रकाशित] ॥

कलिकालसर्वज्ञश्री**हेमचन्द्राचार्य**विरचित**योगशास्त्र** [३–१२०]**स्वोपज्ञवृत्त्यन्तर्गता**

**स्त्रीनिर्वाणसम्बन्धिनी चर्चा —**

"ननु स्त्रीणां निःसत्त्वतया दुःशीलत्वादिना च मोक्षेऽनधिकारः, तत् कथमेताभ्यो दानं साधुदानतुल्यम् ? उच्यते – निःसत्त्वमसिद्धम्, ब्राह्मीप्रभृतीनां साध्वीनां गृहवासपरित्यागेन यति-धर्ममनुतिष्ठन्तीनां महासत्त्वानां नासत्त्वसम्भवः । यदाह –

"ब्राह्मी सुन्दर्यार्या राजीमती चन्दना गणधरान्या ।
अपि देव-मनुजमहिता विख्याताः शीलसत्त्वाभ्याम् ॥
गार्हस्थ्येऽपि सुसत्त्वा विख्याताः शीलवतितमा जगति ।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ॥
सन्त्यज्य राज्यलक्ष्मीं पति-पुत्र-भ्रातृ-बन्धुसम्बन्धम् ।
पारिव्राज्यवहायाः क्रिमसत्त्वं सत्यभामादेः ॥" [[5]स्त्रीनिर्वाण० ३६-३८]

---

१. पृ० ३०॥
२. तु० – पृ० ३१३५॥
३. तु० – पृ० ३६॥
४. तु० – पृ० ३८॥
५. पृ० २८॥

ननु [1]महापापेन मिथ्यात्वसहायेन स्त्रीत्वमर्ज्यते, न हि सम्यग्दृष्टिः स्त्रीत्वं कदाचिद् बध्नाति इति कथं स्त्रीशरीरवर्तिन आत्मनो मुक्तिः स्यात् ? मैवं वोचः, सम्यक्त्वप्रतिपत्तिकाल एवान्तःकोटीकोटीस्थितिकानां सर्वकर्मणां भावेन मिथ्यात्वमोहनीयादीनां क्षयादिसम्भवाद् मिथ्यात्वसहितपापकर्मसम्भवत्वमकारणम् । मोक्षकारणवैकल्यं तु तासु वक्तुमुचितम्, तच्च नास्ति, यतः –

"जानीते जिनवचनं श्रद्धत्ते चरति चार्यिकाऽशबलम्
नास्यास्त्यसम्भवोऽस्यां नादृष्टविरोधगतिरस्ति ॥" [ [2]स्त्रीनिर्वाण० ४ ] तत् सिद्धमेतद् मुक्तिसाधनधनासु साध्वीषु साधुवद् धनवपनमुचितमिति ।"

श्री **मलयगिरिसूरिविरचितायां [3]प्रज्ञापनासूत्रवृत्तौ**

स्त्रीनिर्वाणसम्बन्धिनी चर्चा —

"एतेन यदाहुराशाम्बराः 'न स्त्रीणां निर्वाणम्' इति, तदपास्तं द्रष्टव्यं, स्त्रीनिर्वाणस्य साक्षादनेन सूत्रेणाभिधानात्, तत्प्रतिषेधस्य युक्त्या अनुपपन्नत्वात्, तथाहि — मुक्तिपथो ज्ञानदर्शनचारित्राणि, [4]"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" (तत्त्वार्थे अ० १ सू० १) इति वचनात्, सम्यग्दर्शनादीनि च पुरुषाणामिव स्त्रीणामप्यविकलानि । तथाहि — दृश्यन्ते स्त्रियोऽपि सकलमपि प्रवचनार्थमभिरोचयमानाः, जानते च षडावश्यक-कालिकोत्कालिकादिभेदभिन्नं श्रुतम्, परिपालयन्ति सप्तदशप्रकारमकलङ्कं संयमम्, धारयन्ति च देवासुराणामपि दुर्धरं ब्रह्मचर्यम्, तप्यन्ते च तपांसि मासक्षपणादीनि, ततः कथमिव न तासां मोक्षसम्भवः ?

स्यादेतत् — अस्ति स्त्रीणां सम्यग्दर्शनं ज्ञानं वा, न पुनश्चारित्रं संयमाभावात् । तथाहि — स्त्रीणामवश्यं वस्त्रपरिभोगेन भवितव्यम्, [5]अन्यथा विवृताङ्ग्यस्तास्तिर्यकस्त्रिय इव पुरुषाणामभिभवनीया भवेयुः, लोके च गर्होपजायते, ततोऽवश्यं ताभिर्वस्त्रं परिभोक्तव्यं, वस्त्रपरिभोगे च सपरिग्रहता, सपरिग्रहत्वे च संयमाभाव इति । तदसमीचीनम्, सम्यक्सिद्धान्तापरिज्ञानात्, परिग्रहो हि परमार्थतो मूर्छाऽभिधीयते, "मुच्छा परिग्गहो वुत्तो" (दशवै० ६.२१)

---

१. तु० – पृ० २९ ॥

२. पृ० १४

३. मलयगिरिसूरिविरचितायां नन्दीसूत्रवृत्तौ (पृ० १३१–१३३) अपीयं चर्चोपलभ्यते, तथापि तत्र संक्षिप्तत्वात् प्रज्ञापनासूत्रवृत्तित एवात्रोद्ध्रियत इति ध्येयम् ॥

४. तु० – पृ० १४ ॥ ५. तु० – पृ० १८ ॥

इति वचनात्, तथाहि — मूर्छारहितो भरतश्चक्रवर्ती सान्त:पुरोऽप्यादर्शकगृहेऽवतिष्ठमानो निष्परिग्रहो गीयते, अन्यथा केवलोत्पादासम्भवात्, अपि च – यदि मूर्च्छाया अभावेऽपि वस्त्रसंसर्गमात्रं परिग्रहो भवेत् ततो जिनकल्पं प्रतिपन्नस्य कस्तचित्साधोस्तुपारकणानुपक्ते प्रपतति शीते केनाप्यविपद्योपनिपातमद्य शीतमिति विभाव्य धर्माथिना शिरसि वस्त्रे प्रक्षिप्ते तस्य सपरिग्रहता भवेत्, न चैतदिष्टम् । तस्मान्न वस्त्रसंसर्गमात्रं परिग्रहः, किन्तु मूर्च्छा । सा च स्त्रीणां वस्त्रादिषु न विद्यते, धर्मोपकरणमात्रतया तस्योपादानात्, न खलु ता वस्त्रमन्तरेणात्मानं रक्षयितुमीशते, नापि शीतकालदिषु व्यग्रदशायां स्वाध्यायादिकं कर्तुम्, ततो दीर्घतरसंयमपरिपालनाय यतनया वस्त्रं परिभुञ्जाना न ताः परिग्रहवत्यः ।

[1]अथोच्येत — सम्भवति नाम स्त्रीणामपि सम्यग्दर्शनादिकं रत्नत्रयं, परं न तत् सम्भवमात्रेण मुक्तिपदप्रापकं भवति, किन्तु प्रकर्पप्राप्तम्, अन्यथा दीक्षानन्तरमेव सर्वेषामप्यविशेषेण मुक्तिपदप्राप्तिप्रसक्तिः । सम्यग्दर्शनादिरत्नत्रयप्रकर्षश्च स्त्रीणामसम्भवी, ततो न निर्वाणमिति । तदप्ययुक्तम्, स्त्रीषु रत्नत्रयप्रकर्पासम्भवे ग्राहकप्रमाणस्याभावात् । न खलु सकलदेशकालव्याप्त्या स्त्रीपु रत्नत्रयप्रकर्षासम्भवग्राहकं प्रमाणं विजृम्भते, देशकालविप्रकृष्टेपु प्रत्यक्षस्याप्रवृत्तेः, तदप्रवृत्तौ चानुमानस्याप्यसम्भवात्, नापि तासु रत्नत्रयप्रकर्पासम्भवप्रतिपादकः कोऽप्यागमो विद्यते, प्रत्युत सम्भवप्रतिपादकः स्थाने स्थानेऽस्ति, यथेदमेव प्रस्तुतं सूत्रम् । ततो न तासां रत्नत्रयप्रकर्षासम्भवः ।

[2]अथ मन्येथाः— स्वभावत एवातपेनेव छाया विरुध्यते स्त्रीत्वेन सह रत्नत्रयप्रकर्षः, ततस्तदसम्भवोऽनुमीयते । तदयुक्तमुक्तं युक्तिविरोधात्, तथाहि — रत्नत्रयप्रकर्पः स उच्यते यतोऽनन्तरं मुक्तिपदप्राप्तिः, स चायोग्यवस्थाचरमसमयभावी, अयोग्यवस्था चास्मादृशामप्रत्यक्षा, ततः कथं विरोधगतिः ?, न हि अदृष्टेन सह विरोधः प्रतिपत्तुं शक्यते, मा प्रापत् पुरुषेष्वपि प्रसङ्गः ।

[3]ननु जगति सर्वोत्कृष्टपदप्राप्तिः सर्वोत्कृष्टेनाध्यवसायेनावाप्यते, नान्यथा, एतच्चोभयोरप्यावयोरागमप्रामाण्यबलतः सिद्धम् । सर्वोत्कृष्टे च द्वे पदे — सर्वोत्कृष्टदुःखस्थानं सर्वोत्कृष्टसुखस्थानं च, तत्र सर्वोत्कृष्टदुःखस्थानं सप्तमनरकपृथ्वी, अतः परं परमदुःखस्थानस्याभावात्, सर्वोत्कृष्टसुखस्थानं तु निःश्रेयसम् । तत्र स्त्रीणां सप्तमनरकपृथिवीगमनमागमे निषिद्धम्, निषेधस्य च कारणं तद्गमनयोग्यतयाविधसर्वोत्कृष्टमनोवीर्यपरिणत्यभावः, ततः सप्तमपृथिवीगमनवत्त्वा-

---

१. तु० – पृ० १४॥
२. तु० – पृ० १३–१४॥
३. तु० – पृ० १५॥

भावात्, सम्मूर्छिमादिवत्, अपि च – यासां [1]वादलब्धौ विकुर्वणत्वादिलब्धौ पूर्वगतश्रुताधिगतौ च न सामर्थ्यमस्ति तासां मोक्षगमनसामर्थ्यमित्यतिदुःश्रद्धेयम् । तदेतदयुक्तम्, यतो यदि नाम स्त्रीणां सप्तमनरकपृथिवीगमनं प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभावः, तत एतावता कथमवसीयते — निःश्रेयसमपि प्रति तासां सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो, न हि यो भूमिकर्षणादिकं कर्म कर्तुं न शक्नोति स शास्त्राण्यप्यवगाढुं न शक्नोतीति प्रत्येतुं शक्यम्, प्रत्यक्षविरोधात्, अथ सम्मूर्छिमादिषूभयत्रापि सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो दृष्टः ततोऽत्राप्यवसीयते । ननु यदि तत्र दृष्टस्तर्हि कथमत्रावसीयते ? न खलु बहिर्व्याप्तिमात्रेण हेतुर्गमको भवति, किन्त्वन्तर्व्याप्त्या, अन्तर्व्याप्तिश्च प्रतिबन्धबलेन, न चात्र प्रतिबन्धो विद्यते, न खलु सप्तमपृथिवीगमनं निर्वाणगमनस्य कारणं, नापि सप्तमपृथिवीगमनाविनाभावि निर्वाणगमनं, चरमशरीरिणां सप्तमपृथिवीगमनमन्तरेणैव निर्वाणगमनभावात् । न च प्रतिबन्धमन्तरेणैकस्याभावेऽन्यस्यावश्यमभावः, मा प्रापत् यस्य तस्य वा कस्यचिदभावे सर्वस्याभावप्रसङ्गः । यद्येवं तर्हि कथं सम्मूछिर्मादिषु निर्वाणगमनाभाव इति ? । उच्यते, तथाभवस्वाभाव्यात् तथाहि — ते सम्मूर्छिमादयो भवस्वभावत एव न सम्यग्दर्शनादिकं यथावत्प्रतिपत्तुं शक्नुवन्ति, ततो न तेषां निर्वाणसम्भवः, स्त्रियस्तु प्रागुक्तप्रकारेण यथावत् सम्यग्दर्शनादिरत्नत्रयसम्पद्योग्याः, ततस्तासां न निर्वाणगमनाभावः, अपि च – भुजपरिसर्प्पा द्वितीयामेव पृथिवीं यावद् गच्छन्ति न परतः, परपृथिवीगमनहेतुतथारूपमनोवीर्यपरिणत्यभावात्, तृतीयां यावत् पक्षिणश्चतुर्थीं चतुष्पदाः पञ्चमीमुरगाः, अथ च सर्वेऽप्यूर्ध्वमुत्कर्षतः सहस्रारं यावद्गच्छन्ति, तन्नाधोगतिविषये मनोवीर्यपरिणतिवैषम्यदर्शनादूर्ध्वगतावपि च तद्वैषम्यम्, आह च —

**"विषमगतयोऽप्यधस्तादुपरिष्टात् तुल्यमासहस्रारम् ।**
**गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतुः ।।"** [[2]स्त्रीनिर्वाण० ६]

तथा च सति सिद्धं स्त्रीपुंसानामधोगतिवैषम्येऽपि निवार्णं समम् ।

यदप्युक्तम् 'अपि च यासां वादलब्धौ' इत्यादि, तदप्यश्लीलम्, वादविकुर्वणत्वादिलब्धिविरहेऽपि विशिष्टपूर्वगतश्रुताभावेऽपि माषतुषादीनां निःश्रेयससम्पदधिगमश्रवणात्, आह च —

**"वादविकुर्वणत्वादिलब्धिविरहे श्रुते कनीयसि च ।**
**जिनकल्पमनःपर्यवविरहेऽपि न सिद्धिविरहोऽस्ति ।।** [[3]स्त्रीनिर्वाण० ७] ।।"

१. तु० – पृ० १६ ।।
२. पृ० १५ ।।
३. पृ० १६ ।।

अपि च — [1]यदि वादादिलब्ध्यभाववन्निःश्रेयसाभावोऽपि स्त्रीणामभविष्यत् ततस्तथैव सिद्धान्ते प्रत्यपादयिष्यत, यथा जम्बूयुगादारात् केवलज्ञानाभावः, न च प्रतिपाद्यते क्वापि स्त्रीणां निर्वाणाभाव इति तस्मादुपपद्यते स्त्रीणां निर्वाणमिति कृतं प्रसङ्गेन ।" — पृ० २०–२२ । [ आगमोदयसमितिप्रकाशित ] ॥

रत्नप्रभसूरिविरचितरत्नाकरावतारिकाभिधप्रमाणनयतत्त्वालोक[७–५७]टीकान्तर्गता स्त्रीनिर्वाणसम्वधिनी चर्चा —

"अथ दिक्पटाः प्रकटयन्ति – भवत्वेतादृशस्वरूपो मोक्षः, स तूपात्तस्त्रीशरीरस्यात्मन इति न मृष्यामहे । न खलु स्त्रियो मुक्तिभाजो भवन्ति । तथा च प्रभाचन्द्रः– "स्त्रीणां न मोक्षः, पुरुषेभ्यो हीनत्वाद्, नपुंसकादिवत्" [न्यायकु० पृ० ८७६] इति ।

अत्र ब्रूमः– सामान्येनाऽत्र धर्मित्वेनोपात्ताः स्त्रियः, विवादास्पदीभूता वा । प्राचि पक्षे पक्षैकदेशे सिद्धसाध्यता, असंख्यातवर्षायुष्कदुष्षमादिकालोत्पन्नतिरश्चीदेव्यभव्यस्त्रीणां भूयसीनामस्माभिरपि मोक्षाभावस्याभिधानात् । द्वितीये तु न्यूनता पक्षस्य, विवादास्पदीभूतेति विशेषणं विना नियतस्त्रीलाभाभावात् । प्रकरणादेव तल्लाभे पक्षोपादानमपि तत एव कार्यं न स्यात् । तथाऽप्युपादाने नियतस्यैव तस्योपादानमवदातम्, यथा धानुष्कस्य नियतस्यैव लक्ष्यस्योपदर्शनमिति ।

हेतुकृतः पुरुषापकर्षोऽपि योषितां कुतस्त्यः ? किं सम्यग्दर्शनादिरत्नत्रयाभावेन, विशिष्टसामर्थ्यासत्त्वेन, पुरुषानभिवन्द्यत्वेन, स्मारणाद्यकर्तृत्वेन, अमहर्द्धिकत्वेन, मायादिप्रकर्षवत्त्वेन वा । प्राचि प्रकारे कुतः स्त्रीणां रत्नत्रयाभावः ? । सचीवरपरिग्रहत्वेन चारित्राभावादिति चेत् । तदचतुरस्रम् । यतः परिग्रहरूपता चीवरस्य शरीरसंपर्कमात्रेण, परिभुज्यमानत्वेन, मूर्च्छाहेतुत्वेन वा भवेत् । प्रथमपक्षे क्षित्यादिना शरीरसंपर्किणाऽप्यपरिग्रहेण व्यभिचारः । द्वितीयप्रकारे चीवरपरिभोगस्तासामशक्यत्यागतया, गुरूपदेशाद् वा । नाद्यः पक्षः, यतः संप्रत्यपि प्राणानपि त्यजन्त्यो याः संदृश्यन्ते तासामैकान्तिकात्यन्तिकानन्दसंपदर्थिनीनां बाह्यचीवरं प्रति का नामाशक्यत्यागता ? नग्नयोगिन्यश्च काश्चिदिदानीमपि प्रेक्ष्यन्त एव । द्वितीयपक्षोऽपि न सूक्ष्मः, यतो विश्वजनीनेन विश्वदर्शिना परमगुरुणा भगवता मुमुक्षुपक्ष्मलाक्षीणां यदेव संयमोपकारि, तदेव चीवरोपकरणं[1] "नो कप्पदि निग्गंथीए अचेलाए होत्तए" [ बृहत्कल्पे उ. ५. सू. १६. ] इत्यादिनोपदिष्टम्, प्रतिलेखनकमण्डलुप्रमुखवत्, इति कथं तस्य परिभोगात् परिग्रहरूपता ? प्रतिलेखनादिधर्मोपकरणस्यापि तत्प्रसङ्गात् । तथा च—

---

१. तु० – पृ० १६ ॥

"यत् संयमोपकाराय वर्त्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोऽन्यदधिकरणमाहाऽर्हन्" ।। [स्त्रीनिर्वाण ०१२]

उपकारकं हि करणमुपकरणाम्, अधिक्रियन्ते घाताय प्राणिनोऽस्मिन्निति त्वधिकरणम् ।

अथ प्रतिलेखनं तावत् संयमप्रतिपालनार्थं भगवतोपदिष्टम्, वस्त्रं तु किमर्थमिति? तदपि संयमप्रतिपालनार्थमेवेति ब्रूमः, अभिभूयन्ते हि प्रायेणाऽल्पसत्त्वतया विवृताङ्गोपाङ्ग-संदर्शनजनितचित्तभेदैः पुरुषैरङ्गना अकृतप्रावरणा घोटिका इव घोटकैः ।

ननु यासामतितुच्छसत्त्वानां प्राणिमात्रेणाऽप्यभिभवः, ताः कथं सकलत्रैलोक्याभिभावक-कर्मराशिप्रक्षयलक्षणं मोक्षं महासत्त्वप्रसाध्यं प्रसाधयन्तीति चेत्? तदयुक्तम्, यतो नात्र शरीरसामर्थ्यमतिरिक्तं यस्य भवति तस्यैव निवाणोपार्जनगोचरेण सत्त्वेन भवितव्यमिति नियमः समस्ति, अन्यथा पङ्गुवामनात्यन्तरोगिणः पुमांसोऽपि स्त्रीभिरभिभूयमाना दृश्यन्ते इति तेऽपि तुच्छशरीरसत्त्वाः कथं तथाविधसिद्धिनिबन्धनसत्त्वभाजो भवेयुः? । यथा तु तेषां शरीर-सामर्थ्यासत्त्वेऽपि मोक्षसाधनसामर्थ्यमविरुद्धम्, तथा स्त्रीणामपि सत्यपि वस्त्रे मोक्षाभ्युपगमे ।

गृहिणः कुतो न मोक्ष इति चेद्, ममत्वसद्भावात् । न हि गृही वस्त्रे ममत्वरहितः, ममत्वमेव च परिग्रहः, सति हि ममत्वे नग्नोऽपि परिग्रहवान् भवति, शरीरेऽपि तद्भावात् । आर्यिकायाश्च ममत्वाभावादुपसर्गाद्यासक्तमिवाम्बरमपरिग्रहः, न हि यतेरपि ग्रामं गृहं वनं वा प्रतिवसतोऽममत्वादन्यच्छरणमस्ति । न च निगृहीतात्मनां महात्मनां कासाञ्चित् क्वचिदपि मूर्च्छाऽस्ति? ....................उक्तं च —

"अवि अप्पणो वि देहंमि नायरंति ममाइयं ।" [दशवै० ६–२२] ति ।

एतेन 'मूर्छाहेतुत्वेन' इत्यपि पक्षः प्रतिक्षिप्तः, शरीरवच्चीवरस्यापि काश्चित् प्रति मूर्च्छाहेतुत्वाभावेन परिग्रहरूपत्वाभावात् । तन्न सम्यग्दर्शनादिरत्नत्रयाभावेन स्त्रीणां पुरुषे-भ्योऽपकर्षः ।

नापि विशिष्टसामर्थ्यासत्त्वेन, यतस्तदपि तासां किं सप्तमपृथ्वीगमनाभावेन, वादादि-लब्धिरहितत्वेन, अल्पश्रुतत्वेन, अनुपस्थाप्यता-पाराञ्चितकशून्यत्वेन वा भवेत् । न तावदाद्यः पक्षः, यतोऽत्र सप्तमपृथ्वीगमनाभावो यत्रैव जन्मनि तासां मुक्तिगामित्वं तत्रैवोच्यते, सामान्येन वा । प्राचि पक्षे चरमशरीरिभिरनेकान्तः । द्वितीये त्वयमाशयः–यथैव हि स्त्रीणां सप्तमपृथ्वी-गमनसमर्थतीव्रतराशुभपरिणामे सामर्थ्याभावादपकर्षः, तथा मुक्तिगमनयोग्योत्कृष्टशुभपरिणा-मेऽपि, चरमशरीरिणां तु प्रसन्नचन्द्रराजर्षिप्रमुखाणामुभयत्रापि सामर्थ्याद् नैकत्राऽप्यपकर्षः । तदयुक्तम्, यतो नायमविनाभावः प्रामाणिकः, यदुत्कृष्टाशुभगत्युपार्जनसामर्थ्याभावे सत्युत्कृष्ट-शुभगत्युपार्जनसामर्थ्येनापि न भवितव्यम्, अन्यथा प्रकृष्टशुभगत्युपार्जनसामर्थ्याभावे प्रकृष्टा-

शुभगत्युपार्जनसामर्थ्यं नास्तीत्यपि किं न स्यात् ?, तथा चाऽभव्यानां सप्तमपृथ्वीगमनं न भवेत् ।

अथ वादादिलब्धिरहितत्वेन स्त्रीणां विशिष्टसामर्थ्यासत्त्वम्, यत्र खल्वैहिकवाद-विक्रिया-चारणादि-लब्धीनामपि हेतुः संयमविशेषरूपं सामर्थ्यं नास्ति, तत्र मोक्षहेतुस्तद्भविष्यतीति कः सुधीः श्रद्दधीत ? । तदचारु, व्यभिचारात्, माषतुषादीनां तदभावेऽपि विशिष्टसामर्थ्योपलब्धेः । न च लब्धीनां संयमविशेषहेतुकत्वमागमिकम्, कर्मोदयक्षयक्षयोपशमोपशमहेतुकतया तासां तत्रोदितत्वात् । तथा चाऽवाचि—

"उदयखयखओवसमोवसमसमुत्था वहुप्पगाराओ ।
एवं परिणामवसा लद्धीउ हवन्ति जीवाणां" ।। [वि०भा० गा० ७९७]

चक्रवर्ति–बलदेव–वासुदेवत्वादिप्राप्तयोऽपि हि लब्धयः, न च संयमसद्भावनिबन्धना तत्प्राप्तिः । सन्तु वा तन्निबन्धना लब्धयः, तथापि स्त्रीषु तासां सर्वासामभावोऽभिधीयते, नियतानामेव वा । नाद्यः पक्षः, चक्रवर्त्यादिलब्धीनां कासाञ्चिदेव तासु प्रतिषेधात्, आमर्षौ-षध्यादीनां तु भूयसीनां भावात् । द्वितीयपक्षे तु व्यभिचारः, पुरुषाणां सर्ववादादिलब्ध्यभावेऽपि विशिष्टसामर्थ्यस्वीकारात्, अकेशवानामेव, अतीर्थकरचक्रवर्त्यादीनामपि च मोक्षसंभवात् ।

अल्पश्रुतत्वमपि मुक्त्यवाप्त्याऽनुमितविशिष्टसामर्थ्यैर्माषतुषादिभिरेवाऽनैकान्तिकमित्यनुद्-घोष्यमेव ।

अनुपस्थाप्यता-पाराञ्चितकशून्यत्वेनेत्यप्ययुक्तम्, यतो न तन्निषेधाद् विशिष्टसामर्थ्या-भावः प्रतीयते । योग्यतापेक्षो हि चित्रः शास्त्रे विशुद्ध्युपदेशः । उक्तं च—

"संवरनिर्जररूपो वहुप्रकारस्तपोविधिः शास्त्रे ।
रोगचिकित्साविधिरिव कस्यापि कथञ्चिदुपकारी" ।। [स्त्रीनिर्वाण०]

पुरुषानभिवन्द्यत्वमपि योषितां नापकर्षाय, यतस्तदपि सामान्येन, गुणाधिकपुरुषापेक्षं वा । आद्येऽसिद्धतादोषः, तीर्थकरजनन्यादयो हि पुरन्दरादिभिरपि प्रणताः, किमङ्ग शेषपुरुषैः ? द्वितीये तु शिष्या अप्याचार्यैर्नाभिवन्द्यन्त एवेति तेऽपि ततोऽपकृष्यमाणत्वेन निर्वृतिभाजो न भवेयुः, न चैवम्, चण्डरुद्रादिशिष्याणां शास्त्रे तच्छ्रवणादिति मूलहेतोर्व्यभिचारः ।

एतेन स्मारणाद्यकर्तृत्वमपि प्रतिक्षिप्तम् । अथ पुरुषविषयं स्मारणाद्यकर्तृत्वमत्र विव-क्षितं, न तु स्मारणाद्यकर्तृत्वमात्रम्, न च स्त्रियः कदाचन पुंसा स्मारणादीन् कुर्वन्तीति न व्यभिचार । इति चेत् तर्हि पुरुषेतिविशेषणं करणीयम् । करणेऽप्यसिद्धतादोषः, स्त्रीणामपि कासाञ्चित् पारगतागमरहस्यवासितसप्तधातूनां क्वापि तथाविधावसरे समुच्छृङ्खलप्रवृत्ति-पराधीनसाधुस्मारणादेरविरोधात् ।

अथामहर्द्धिकत्वेन स्त्रीणां पुरुषेभ्योऽपकर्षः । सोऽपि किमाध्यात्मिकीं समृद्धिमाश्रित्य, बाह्यां वा । नाऽऽध्यात्मिकीम्, सम्यग्दर्शनादिरत्नत्रयादेस्तासामपि सद्भावात् । नापि बाह्याम्, एवं हि महत्यास्तीर्थकरादिलक्ष्म्या गणधरादयः, चक्रधरादिलक्ष्म्याश्चेतरक्षत्रियादयो न भाजनम्, इति तेषामप्यमहर्द्धिकत्वेनापकृष्यमाणत्वाद् मुक्त्यभावो भवेत । अथ याऽसौ पुरुषवर्गस्य महती समृद्धिस्तीर्थकरत्वलक्षणा, सा स्त्रीषु नास्तीत्यमहर्द्धिकत्वमासां विवक्ष्यते । तदानीमप्यसिद्धता, स्त्रीणामपि परमपुण्यपात्रभूतानां क्वासाञ्चित् तीर्थकृत्त्वाविरोधात्, तद्विरोधसाधकप्रमाणस्य कस्याऽप्यभावात्, एतस्याऽद्यापि विवादास्पदत्वात्, अनुमानान्तरस्य चाभावात् ।

मायादिप्रकर्षवत्त्वेनेत्यप्यशस्यम्, तस्य स्त्रीपुंसयोस्तुल्यत्वेन दर्शनाद्, आगमे च श्रवणात्, श्रूयते हि चरमशरीरिणामपि नारदादीनां मायादिप्रकर्षवत्त्वम् । तन्न पुरुषेभ्यो हीनत्वं स्त्री-निर्वाणनिषेधे साधीयान् हेतुः ।

यत् पुनः "निर्वाणकारणं ज्ञानादिपरमप्रकर्षः स्त्रीषु नास्ति, परमप्रकर्षत्वात्, सप्तमपृथ्वी-गमनकारणाऽपुण्यपरमप्रकर्षवत्" [न्यायकु० पृ० ८७०] इति तेनैवोक्तम् । तत्र मोहनीयस्थिति-परमप्रकर्षेण स्त्रीवेदादिपरमप्रकर्षेण च व्यभिचारः । "नास्ति स्त्रीणां मोक्षः, परिग्रहवत्त्वात् गृहस्थवद्" [न्यायकु० पृ० ८७२] इत्यपि न पेशलम्, धर्मोपकरणचीवरस्यापरिग्रहत्वेन प्रसाधित-त्वात् । इति स्त्रीनिर्वाणे संक्षेपेण बाधकोद्धारः ।

साधकोपन्यासस्तु–मनुष्यस्त्री काचिद् निर्वाति, अविकलतत्कारणत्वात्, पुरुषवत् । निर्वाणस्य हि कारणमविकलं सम्यग्दर्शनादिरत्नत्रयम् तच्च तासु विद्यते एवेत्यादित एवोक्तम्, इति नासिद्धमेतत् । विपक्षाद् नपुंसकादेरत्यन्तव्यावृत्तत्वाद् न विरुद्धमनैकान्तिकं वा । तथा मनुष्यस्त्रीजातिः कयाचिद् व्यक्त्या मुक्त्यविकलकारणवत्या तद्वती, प्रवज्याधिकारित्वात्, पुरुषवत् । न चैतदसिद्धं साधनं "गुव्विणी बालवच्छा य पव्वावेउं न कप्पइ" [निशीथ भा० गा० ३५०८, पञ्चकल्पभा० गा० २००] इति सिद्धान्तेन तासां तदधिकारित्वप्रतिपादनात्, विशेषप्रतिषेधस्य शेषाभ्यनुज्ञानान्तरीयकत्वात् । दृश्यन्ते च सांप्रतमप्येताः कृतशिरोलुञ्चना उपात्तपिच्छका-यतो न मुक्तिः स्यात् ?" कमण्डलुप्रमुखयतिलिङ्गाश्च, इति कुतो नैतासां प्रवज्याधिकारित्वसिद्धिः

वैक्रमे पञ्चदशे शतके विद्यमानैः श्री-एतान् पूर्वनिर्दिष्टान् ग्रन्थान् मुख्यतयाऽवलम्ब्य **गुणरत्न**सूरिभिः श्रीहरिभद्रसूरिविरचित**षड्दर्शनसमुच्चयस्य** [५२तमकारिकायाः] **बृहद्वृत्तौ** [भारतीयज्ञानपीठप्रकाशितायां पृ० ३०१–३०८] अधिकं चाप्यपरमुत्प्रेक्ष्य वैक्रमे सप्तदशे शतके विद्यमानैर्वाचकवरश्री**यशोविजयैः** श्रीहरिभद्रसूरिरचित**शास्त्रवार्तासमुच्चयस्य स्याद्वादकल्पलता**-भिधायां वृत्तौ [पृ० ४२५–४३०], उपाध्यायश्री**मेघविजयादि**भिः **युक्तिप्रबोध**[पृ० ११४]-प्रभृतिषु ग्रन्थेषु स्त्रीनिर्वाणसम्बन्धिनी चर्चा विस्तरेण विहितास्ति । जिज्ञासुभिस्तत्रैव विलोक-नीयम् ।

दिगम्बराचार्यश्रीप्रभाचन्द्रविरचिते न्यायकुमुदचन्द्रे स्त्रीनिर्वाणसम्बन्धी पूर्वपक्षः—

"नन्विदमस्ति तत्प्रसाधकं प्रमाणम् – [१]अस्ति स्त्रीणां निर्वाणम् अविकलकारणत्वात् पुंवत् । निर्वाणस्य हि कारणं रत्नत्रयम्, "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" [तत्त्वार्थसू० १-१] इत्यभिधानात् । तच्च स्त्रीषु विद्यते, तथाहि – [२]सर्वज्ञोक्तार्थानाम् 'इदमित्थमेव' इति श्रद्धानं सम्यग्दर्शनम्, यथावदवगमः सम्यग्ज्ञानम्, तदुक्तव्रतस्य यथावदनुष्ठानं सम्यक्चारित्रम्, एतद्रत्नत्रयम् । एतच्च स्त्रीषु सिद्धयत् सर्वकर्मविप्रमोक्षलक्षणं मोक्षं साधयति । [३]नहि स्त्रीषु रत्नत्रयस्य केनचिद्विरोधोऽस्ति यतोऽविकलकारणत्वासिद्धिः स्यात् ।

[४]अथोच्यते – स्त्रियो रत्नत्रयविरुद्धाः पुंसोऽन्यत्वात् देवादिवत् । सुप्रसिद्धो हि देवनारकतिर्यग्भोगभूमिजानां पुंसोऽन्येषां देवादित्वेन रत्नत्रयस्य विरोधः, एवं स्त्रीणां स्त्रीत्वेनैव अस्य विरोधः सिद्ध इति । तदसमीक्षिताभिधानम्, यतोऽविकलकारणस्य भवतोऽन्यभावेऽभावात् विरोधगतिर्भवति । स्त्रीत्वसद्भावे च रत्नत्रयाभावः प्रत्यक्षतः, अनुमानात्, आगमाद्वा प्रतीयेत ? न तावत् प्रत्यक्षतः, रत्नत्रयस्य अतीन्द्रियत्वात् । नाप्यनुमानतः, तदभावाऽविनाभाविनो लिङ्गस्य कस्यचिदभावात् । नाप्यागमात्, तत्र तदभावावेदिनः तस्याप्यसंभवात् । नहि सुरनारकादिवत् तत्र तदभावप्रतिपादकं किञ्चित् प्रवचनवचनं संभवति । नन्वस्तु रत्नत्रयमात्रं तत्र न तदस्माभिर्निषिध्यते तस्य मोक्षाऽप्रसाधकत्वात्, यत्तु मोक्षप्रसाधकं प्रकर्षपयन्तप्राप्तम् तस्य तत्राभावात् मोक्षाभावः इति, तदयुक्तम्, अदृष्टे विरोधप्रतिपत्तेरनुपपत्तेः । न खलु प्रकर्षपर्यन्तं प्राप्तं रत्नत्रयम् अस्माकं दृश्यम्, न चादृश्यस्य विरोधः प्रतिपत्तुं शक्यः अतिप्रसङ्गात् । न चाप्रतिपन्नविरोधस्य तस्य तत्राभावो ग्रहीतुं शक्यः अतिप्रसक्तेरेव ।

अथ मतम् — अनुमानतः स्त्रीणां निर्वाणाभावप्रतीतेर्न तत्र तत्सद्भावाभ्युपगमो युक्तः, तथाहि—नास्ति स्त्रीणां निर्वाणम् सप्तमपृथिवीगमनाभावात् सम्मूर्च्छिमादिवत् इति, तदसङ्गतम्, विपर्ययव्याप्तेरसिद्धितः तद्गमनाभावस्य निर्वाणाभावेनाऽव्याप्तेः । इह यद् यत्र नियम्यते तद्विपर्ययेण तद्विपक्षस्य व्याप्तौ नियमो दृष्टः, यथा अग्निना धूमस्य व्याप्तौ धूमाभावेन अग्न्यभावस्य, शिंशपान्वस्य च वृक्षत्वेन व्याप्तौ वृक्षत्वाभावस्य शिंशपात्वाभावेन व्याप्तिः । न चैवमत्र विपर्ययव्याप्तिरस्ति, तदभावश्च सप्तमपृथिवीगमनादेः निर्वाणं प्रत्यकारणत्वात् अव्यापकत्वाच्च सिद्धः । नहि सप्तमपृथिवीगमनं निर्वाणस्य रत्नत्रयवत् कारणं सिद्धम् गुणाष्टकवद्वा व्यापकम् येन तदभावे निर्वाणाभावः स्यात् । नचाकारणाऽव्यापकस्य निवृत्तौ अकार्य-

---

१. तु० – पृ० १३ पं० ३ ॥
२. तु० – पृ० १४ पं० १० ॥
३. तु० – पृ० १३ पं० ६ ॥
४. तु० – पृ० १३-१४ ॥

व्याप्यस्य निवृत्तिः अतिप्रसङ्गात्, अतः सन्दिग्धविपक्षव्यावृत्तिकमिदं साधनम् । चरमदेहैः निश्चितव्यभिचारञ्च, तेहि तेनैव जन्मना मुक्तिभाजो न सप्तमपृथिवीं गच्छन्ति अथ च मुच्यन्ते ।

किञ्च,

"विपमगतयोप्यधस्तात् उपरिष्टात्तुल्यमासहस्रारं
गच्छन्ति च तिर्यञ्चः तदधोगत्यूनताऽहेतुः ॥"

नहि अधोगतौ स्त्रीपुंसयोरतुल्यं सामर्थ्यमिति सुगतावपि अतुल्यत्वं युक्तम्, अशुभपरिणामस्य शुभपरिणामं प्रत्यहेतुत्वात् । तथाहि — भुजगखगचतुष्पात्सर्पजलचराणां विषमाऽधोगतिः –भुजगानां सं(नामसं)ज्ञिनां प्रथमायाम्, खगानां तृतीयायाम्, चतुष्पदां पञ्चम्याम्, सर्पाणां षष्ठयाम्, जलचराणां सप्तम्यामधोभूमौ उत्पादात्, शुभगतिस्तु समा सर्वेषामेवैषां सहस्रारान्तस्योपरि उत्पादस्य संभवात् ।

न च वादादिलब्ध्यभावात्तासां मोक्षाभावः' इत्थमेव मोक्षः' इति नियमाभावात् । "श्रूयन्ते हि अनन्ताः सामायिकमात्रसंसिद्धाः" [तत्त्वार्थभा० सम्बन्ध का० २७. (१)] यदि च स्त्रीणां यथा वादाद्यतिशयाः तपोविभवजन्मानो न संभवन्ति तथा मोक्षोपि न स्यात्, तदा आगमे तदतिशयाभाववत् मोक्षाभावोऽप्युच्येत । नह्यस्य परिशेषणे किञ्चिन्निबन्धनं पश्यामः ।

[१]अथ स्त्रीणां वस्त्रलक्षणपरिग्रहसद्भावान्न मोक्षः, तर्हि मोक्षार्थित्वात् किन्न तत् ताभिः परित्यज्यते? न खलु वस्त्रं प्राणाः, तेपि हि मुक्त्यर्थिना परित्यज्यन्ते किं पुनर्न वस्त्रम्? अथ "नो कप्पइ णिग्गंथीए अचेलाए होत्तए" [कल्पसू० ५–२०] इत्यागमविरोधः तस्याः तत्परित्यागे, तर्हि प्रतिलेखनवत् मुक्त्यङ्गमेव तत्स्यात् । यथैव हि सर्वज्ञैः मोक्षमार्गप्रणायकैः उपदिष्टं प्रतिलेखनं मुक्त्यङ्गं भवति, न पुनः परिग्रहः तथा वस्त्रमप्यविशेषात् । यदि च धर्मसाधनानां सूत्रविहितानां परिग्रहत्वं स्यात् तदा पिण्डौषधिशय्यादीनामपि वस्त्रवत् परिग्रहत्वं स्यात् । तथा च तदुपायिनां मोक्षाभावः स्यात् । सत्यपि वस्त्रे मोक्षाभ्युपगमे गृहिणां कुतो न मोक्षः इति चेत्? ममत्वसद्भावात् । नहि गृही वस्त्रे ममत्वरहितः । ममत्वमेव च परिग्रहः । सति हि ममत्वे नग्नोऽपि परिग्रहवान् भवति । आर्यिकायाश्च ममत्वाभावाद् उपसर्गाद्यासक्तमिव अम्बरमपरिग्रहः । नहि यतेरपि ग्रामं गृहं वा प्रविशतः कर्म नोकर्म च आददानस्य अपरिग्रहत्वे अममत्वादन्यत् शरणमस्ति ।

[२]अथ वस्त्रे जन्तूत्पत्तेः हिंसासद्भावतः चारित्रस्यैवाऽसंभवात् कथं मोक्षप्राप्तिः? तन्न, प्रमादाभावे हिंसाऽनुपपत्तेः । प्रमादो हि हिंसा । "प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा" [तत्त्वार्थसू० ७–१३] इत्यभिधानात् । अन्यथा पिण्डौषधिशय्यादौ यतेरपि हिंसकत्वं स्यात्!

---

१. तु० – पृ० १८॥
२. तु० – पृ० २०॥

अर्हदुक्तेन यत्नेन सञ्चरतोऽस्य प्रमादाभावादहिंसकत्वे आर्यिकाया अपि अहिंसकत्वं स्यादविशेषात् । तदुक्तम् —

"जियदु य मरुदु अ जीवो अयदाचारस्स णिच्छिदा हिंसा ।
पयदस्स णत्थि बन्धो हिंसामेत्तेण समिदस्स ॥" [प्रवचनसा० ३–१७]

[1]न च पुरुषैरवन्द्यत्वात् स्त्रीणां मोक्षाभावः, गणधरादिभिर्व्यभिचारात्, ते हि नार्हदादिभिर्वन्द्यन्ते अथ च मुच्यन्ते । ततो रत्नत्रयमेव तत्कारणं न वन्द्यत्वमवन्द्यत्वं वा ।

[2]न च मायाबाहुल्यात्तासां निर्वाणाभावः, पुंसामपि तद्बाहुल्यसद्भावात् । मोहोदयो हि तत्कारणम्, स च उभयोरप्यविशिष्टः ।

[3]न च हीनसत्त्वाः स्त्रियः ततो न निर्वान्ति इत्यभिधातव्यम्, यतः सत्त्वं तपःशीलसाधारणम् इह एष्टव्यम् नान्यत्, तस्य निर्वाणं प्रत्यनङ्गत्वात्, तच्च आर्यासु सुप्रसिद्धमेव । उक्तञ्च —

"गार्हस्थ्येऽपि सुसत्वा विख्याताः शीलवत्तया जगति ।
सीतादयः कथं तास्तपसि विशीला विसत्त्वाश्च ॥" [[4]स्त्रीनिर्वाण० ३७]

[5]तथा "अट्ठ सयमेगसमये पुरुसाणं णिव्वुदी समक्खादा ।
थीलिंगेण च वीसं सेसा दसक त्ति बोधव्वा ॥" [ ] इत्याद्यागमश्च स्त्रीनिर्वाणे प्रमाणम् ।

[6]अथ अत्र स्त्रीशव्देन स्त्रीवेदो गृह्यते, कथमेवमपि स्त्रीणां निर्वाणनिषेधः? यथैव हि स्त्रीवेदेन पुंसः सिद्धिः तथा स्त्रीणामपि स्यात्, भावो हि सिद्धेः कारणम् ।

[7]किञ्च, द्रव्यतः पुरुषः भावतः स्त्रीरूपो भूत्वा यथा निर्वाति तथा द्रव्यतः स्त्र्यपि भावतः पुरुषो भूत्वा किन्न निर्वाति अविशेषात्? न च सिद्ध्यतो वेदः संभवति, अनिवृत्तिवादरसाम्यराये एव अस्य परिक्षयात् । अथ भूतपूर्वगत्या क्षपकश्रेण्यारोहणं येन वेदेन करोति तेनासौ मुक्तः इत्युच्यते, ननु किमनेन उपचारेण? स्त्रिया एव स्तनप्रजननधर्मादिमत्या निर्वाणमस्तु इति ॥ छ ॥"–पृ० ८६५–८७० [माणिक्यचंद्र दिगम्वर जैनग्रन्थमालाप्रकाशित] ॥

---

१. तु० – पृ० २५ ॥
२. तु० – पृ० २७ ॥
३. तु० – पृ० २८ ॥
४. पृ० २८ ॥
५. तु० – पृ० ३० ॥
६. तु० – पृ[illegible]
७. तु० – पृ[illegible]

# केवलिभुक्तिप्रकरणे प्रथमं परिशिष्टम् ।

[ केवलिभुक्तिसम्बन्धिनी चर्चा यत्रोपलभ्यते तेभ्यः कतिपयप्राचीनग्रन्थेभ्य उपयोग्यंशोऽत्रोद्ध्रियते ]

**सूत्रकृतांगसूत्रस्य शीलाचार्यविरचितायां वृत्तौ केवलिभुक्तेश्चर्चा[1] ––**

"ननु केवलिनो घातिकर्मक्षयेऽनन्तवीर्यत्वान्न भवत्येव कावलिक आहारः। तथाहि –– आहारादाने यानि वेदनादीनि षट् कारणान्यभिहितानि तेषां मध्य एकमपि न विद्यते केवलिनि, तत् कथमसावाहारं वहुदोषदुष्टं गृह्णीयात् ? तत्र न तावत् तस्य वेदनोत्पते, तद्वेदनीयस्य दग्धरज्जुस्थानिकत्वात्, सत्यामपि न तस्य तत्कृता पीडा अनन्तवीर्यत्वात् ।[2] वैयावृत्यकारणं तु भगवति सुरासुरनराधिपतिपूज्ये न संभाव्यत एवेति। ईर्यापथं पुनः केवलज्ञानावरणपरिक्षयात् सम्यगवलोकयत्वेवासौ। संयमस्तु तस्य यथाख्यातचारित्रिणो निष्ठितार्थत्वाद् अनन्तवीर्यत्वाद् नाहारग्रहणाय कारणीभवति। प्राणवृत्तिस्तु तस्यानपवर्तितत्वादायुपोऽनन्तवीर्यत्वाच्चान्यथासिद्धैव। धर्मचिन्तावसरस्त्वपगतो निष्ठितार्थत्वात् । तदेवं केवलिनः कावलिकाहारो बह्वपायत्वाद् न कथञ्चिद् घटत इति स्थितम् ।

अत्रोच्यते –– तत्र यत् तावदुक्तं ' घातिकर्मक्षये केवलज्ञानोत्पत्तावनन्तवीर्यत्वाद् न केवलिनो भुक्तिः ' इति तदागमानभिज्ञस्य तत्त्वविचाररहितस्य युक्तिहृदयमजानतो वचनम्। तथाहि –– [3]यदाहारनिमित्तं वेदनीयं कर्म तत् तस्य तथैवास्ते, [4]किमिति सा शारीरी स्थितिः प्राक्तनी न भवति ? प्रमाणं च –– [5]अस्ति केवलिनो भुक्तिः, समग्रसामग्रीकत्वात्, पूर्वभुक्तिवत्। सामग्री चेयं प्रक्षेपाहारस्य तद्यथा –– पर्याप्तत्वं ? वेदनीयोदयः २ आहारपक्तिनिमित्तं तैजसशरीरं ३ दीर्घायुष्कत्वं चेति। तानि च समस्तान्यपि केवलिनि सन्ति।

---

१. प्रभूतेपु स्थलेपु शव्दतोऽर्थतश्च समानप्रायेयं चर्चा पड्दर्शनसमुच्चयस्य गुणरत्नसूरिकृतायां वृतौ (पृ० २०३–२१०) उपलभ्यते ॥

२. "वैयावृत्यकरणं" –– ष० गुण० । ३ तु० –– पृ० ४० पं० १४–१५ ॥ ४ "तथा च किमिति" –– ष० गुण० ॥ ५ तु० –– पृ० ३९ ॥

यदपि दग्धरज्जुसंस्थानिकत्वमुच्यते वेदनीयस्य तदप्यनागमिकमयुक्तिसंगतं च । आगमे ह्यत्यन्तोदयः सातस्य केवलिन्यभिधीयते । युक्तिरपि — यदि घातिकर्मक्षयाज्ज्ञानादयस्तस्याभूवन् वेदनीयोद्भवायाः क्षुधः किमायातं येनासौ न भवति ? न तयोश्छायातपयोरिव सहानवस्थानलक्षणो नापि भावाभावयोरिव परस्परपरिहारलक्षणः कश्चिद् विरोधोऽस्तीति । सातासातयोश्चान्तर्मुहूर्तपरिवर्तमानतया यथा सातोदय एवमसातोदयोऽपीत्यनन्तवीर्यत्वे सत्यपि शरीरवलापचयः क्षुद्वेदनीयोद्भवा पीडा च भवत्येव । न चाहारग्रहणे तस्य किञ्चित् क्षूयते, केवलमाहोपुरुषिकामात्रमेवेति ।

यदप्युच्यते 'वेदनीयस्योदीरणाया[१] अभावात् प्रभूततरपुद्गलोदयाभावः, तदभावाच्चात्यन्तं वेदनीयपीडाऽभावः' इति [ तदपि ] वाङ्मात्रम्, तथाहि — अविरतसम्यग्दृष्टचादिष्वेकादशसु स्थानकेषु वेदनीयस्य गुणश्रेणीसद्भवात् प्रभूतपुद्गलोदयसद्भावः, ततः किं तेषु प्राक्तनेभ्योऽधिकपीडासद्भाव इति । अपिच–यो जिने सातोदयस्तीव्रः किमसौ प्रचुरपुद्गलोदयेनेति । अतो यत् किञ्चिदेतदिति । तदेवं सातोदयवदसातोदयोऽपि केवलिन्यवारित इति तयोरन्तर्मुहूर्तकालेन परिवर्तमानत्वात् । यदपि क्वचित् कैश्चिदभिधीयते 'विपच्यमानतीर्थकरनाम्नो देवस्य च्यवनकाले षण्मासकालं यावदत्यन्तं सातोदय एव' इति असावपि यदि स्याद् न नो वाधायै केवलिनां भुक्तेरनिवारितत्वात् ।

यदप्युच्यते '[२]आहारविषयकांक्षारूपा क्षुद् भवति, अभिकाङ्क्षा चाहारपरिग्रहवुद्धिः, सा च मोहनीयविकारः, तस्य चापगतत्वात् केवलिनो न भुक्तिः' इति, एतदप्यसमीचीनम्, [३]यतो मोहनीयविपाकः क्षुद् न भवति, तद्विपाकस्य प्रतिपक्षभावनया प्रतिसंख्यानेन निवर्त्यमानत्वात् । तथाहि – कषायाः प्रतिकूलभावनया निवर्त्यन्ते, तथा चोक्तम् —

'उवसमेण हणे कोहं माणं मद्दवया जिणे ।
मायं चज्जवभावेण लोभं संतुट्ठिए जिणे ।।' [ दशवै० ८–३९ ]
मिथ्यात्व-सम्यक्त्वयोश्च परस्परनिवृत्तिर्भावनाकृता प्रतीतैव ।
वेदोदयोऽपि विपरीतभावनया निवर्तते । तदुक्तम् —
'काम ! जानामि ते मूलं संकल्पात् किल जायसे ।
ततस्तं न करिष्यामि ततो मे न भविष्यसि ।।'

हास्यादिषट्कमपि चेतोविकाररूपतया प्रतिसंख्यानेन निवर्तते । क्षुद्वेदनीयं तु रोगशीतोष्णादिवज्जीवपुद्गलविपाकितया न प्रतीपवासनामात्रेण निवर्तते, अतो न मोहविपाकस्वभावा क्षुदिति।

१. तु० – पृ० ४५ ।। २. तु० – पृ० ४२ ।। ३. तु० – पृ० ४३ ।।

तदेवं व्यवस्थिते यत् कैश्चिदाग्रहगृहीतैरभिधीयते यथा —

'[१]अपवर्त्यतेऽकृतार्थं नायुर्ज्ञानादयो न हीयन्ते ।
जगदुपकृतावनन्तं वीर्यं किं गततृषो भुक्तिः ॥' [केवलिभुक्ति० १६]

इति, तदेतत् प्लवते, यतश्छद्मस्थावस्थायामप्येतदस्तीति तत्रापि किमिति भुङ्क्ते? तत्र समस्तवीर्यान्तरायक्षयाभावाद् भुक्तिसद्भाव इति चेत्, तदयुक्तम्, यतः किं तत्रायुषोऽपवर्तनं स्यात् किं वा चतुर्णां ज्ञानानां काचिद्धानिः स्याद् येन भुक्तिरिति । तस्माद् यथा दीर्घकालस्थितेरायुष्कं कारणमेवमाहारोऽपि, यथा सिद्धिगतेर्व्युपरतक्रियस्य ध्यानस्य चरमक्षणः कारणमेवं सम्यक्त्वादिकमपीति । अनन्तवीर्यतापि तस्याहारग्रहणे सति न विरुध्यते, यथा तस्य देवच्छन्दादीनि विश्रामकारणानि गमन-निषीदनानि च भवन्त्येवमाहारक्रियापि विरोधाभावात्, न ह्यत्र बलवत्तरवीर्यवतोऽल्पीयसी क्षुदिति । एवं च स्थिते यत् किञ्चिदेतत् ।

अपिच — [२]एकादश परीषहा वेदनीयकृता जिने प्रादुष्ष्यन्ति, अपरे तु एकादश ज्ञानावरणीयादिकृतास्तत्क्षयेऽपगता इतीयमप्युपपत्तिः केवलिनि भुक्तिं साधयति । तथाहि — क्षुत्-पिपासा-शीतोष्ण-दंशमशक-नाग्न्या-ऽरति-स्त्री-चर्या-निषद्या-शय्या-ऽऽक्रोश-वध-याच्ञा-ऽलाभ-रोग-तृणस्पर्श-मल-सत्कारपुरस्कार-प्रज्ञा-ऽज्ञान-दर्शनानीत्येते द्वाविंशतिर्मुमुक्षुणा परिसोढव्याः परीषहाः, तेषां च मध्ये ज्ञानावरणीयोत्थौ प्रज्ञा-ऽज्ञानाख्यौ, दर्शनमोहनीयसंभवो दर्शनपरिषहः, अन्तरायोत्थोऽलाभपरिषहः, चारित्रमोहनीयसंभूतास्त्वमी — नागन्या-ऽरति-स्त्री-निषद्या-ऽऽक्रोश-याच्ञा-सत्कार-पुरस्काराः । एते चैकादशापि जिने केवलिनि न संभवन्ति तत्कारणानां कर्मणामपगतत्वात्, न हि कारणाभावे क्वचित् कार्योपपत्तिः । शेषास्त्वेकादश जिने सम्भवन्ति तत्कारणस्य वेदनीयस्य विद्यमानत्वात् । ते चामी — क्षुत्-पिपासा-शीतोष्ण-दंशमशक-चर्या-शय्या-वध-रोग-तृणस्पर्श-मलाख्याः, एते च वेदनीयप्रभवाः, तच्च केवलिनि विद्यते, न च निदानानुच्छेदे निदानिन उच्छेदः सम्भाव्यते, अतः केवलिनि क्षुद्वेदनीयादिपीडा सम्भाव्यते, केवलमसावनन्तवीर्यत्वाद् न विह्वलीभवति, न चासौ निष्ठितार्थो निष्प्रयोजनमेव पीडामधिसहते । [३]न च शक्यते वक्तुम — एवंभूतमेव तस्य भगवतः शरीरं यदुत क्षुत्पीडा न बाधते, आहारमन्तरेण च वर्तते, यथा स्वभावेनैव प्रस्वेदादिरहितमेवं पक्षेपाहाररहितम् इति, एतच्चाप्रमाणकत्वादपकर्णनीयम् ।

अपिच—केवलोत्पत्तेः प्राग् भुक्तेरभ्युपगमात् केवलोत्पत्तावपि तदेवौदारिकं शरीरमाहाराद्युपसंस्कार्यम् । अथान्यथाभावः कैश्चिदुच्यते असावपि युक्तिरहितत्वादभ्युपगममात्रक एवेति ।

---

१. पृ० ४५ ॥
२. तु० — पृ० ४९–५० ।
३. तु० — पृ० ४८ पं० १३ ॥

तदेवं देशोनपूर्वकोटिकालस्य केवलिस्थितेः समशनादौदारिकशरीरस्थित्येव सभावलक्षणमेव प्रक्षेपाहारोऽपि तथाहि — 'तैजसशरीरेण मृदूकृतस्याभ्यवहृतस्य द्रव्यस्य रसपर्यायेण परिणामितस्योत्तरोत्तरपरिणामक्रमेण औदारिकशरीरिणामनेन प्रकारेण क्षुदुद्भवो भवति वेदनीयोदये सति। इयं च सामग्री सर्वापि भगवति केवलिनि संभवति, तत् किमर्थमसौ न भुङ्क्ते ? न च घातिचतुष्टयस्य सहकारिकारणभावोऽस्ति येन तदभावात् तदभाव इत्युच्यते।"-पृ० ३४५-३४७ [आगमोदय-समितिप्रकाशित ]

अभयदेवसूरिविरचितायां सम्मतिवृत्तौ केवलिभुक्तिरुक्ता —

"अत एव छद्मस्थे भुजिक्रियादर्शनात केवलिनि तद्विजातीये भुजिक्रियाकल्पना न युक्ता, अन्यथा चतुर्ज्ञानित्वा-ऽकेवलित्वसंसारित्वादयोऽपि तत्र स्युः। न वेदनीयं तद्भुक्तिकारणं तथाभूतशक्त्यायुष्ककर्मणोस्तद्धेतुत्वादेकवैकल्ये तदभावात्। औदारिकव्यपदेशोऽप्युदारत्वान्न भुक्तेः। यदपि 'एकेन्द्रियादीनामयोगिपर्यन्तानामाहारिणां सूत्रोपदेशात् केवलिनः कवलाहारित्वं केचित् प्रतिपन्नाः' तदपि सूत्रार्थापरिज्ञानात्, तत्र ह्येकेन्द्रियादिभिः सह भगवतो निर्देशान्निरन्तराहारोपदेशाच्च शरीरप्रायोग्यपुद्गलग्रहणमाहारत्वेन विवक्षितमन्यथा क्षणत्रयमात्रमपहाय समुद्घातावस्थायां निरन्तराहारो भगवांस्तेनाहारेण भवेत्। यदपि 'यथासंभवमाहारव्यवस्थितेः सह निर्देशेऽपि कवलाहार एव केवलिनो व्यवस्थाप्यते युक्त्या अन्यथा तच्छरीरस्थितेरभावादिति' तदपि न युक्तिक्षमम् यतो यदि नामास्मदादेः प्रक्षेपाहारमन्तरेणौदारिकशरीरस्थितेः प्रभूत-कालमभावात् केवलिनोऽपि तथाऽनुमीयते तर्हि सर्वज्ञतापि तस्य कथमवसातुं शक्या दृष्टव्यति-क्रमप्रकल्पनायोगात्, श्रूयते च प्रक्षेपाहारमन्तरेणाप्यौदारिकशरीरस्थितिश्चिरतरकाला प्रथमतीर्थ-कृत्प्रभृतीनाम्। न च तदियत्तानियमप्रतिपादकं प्रमाणमस्तीति सूत्रभेदकरणनिमित्तासंभवात् यथान्यासमेव सूत्रार्थपरिकल्पनमस्तु, एवं च निरन्तराहारवचनमप्यनुल्लङ्घितं भवेत्। अथापि स्यादतिशयदशर्नान्निरवशेषदोपावरणहानेरत्यन्तशुद्धात्मस्वभावप्रतिपत्तिवत् प्रक्षेपाहारविकला औदारिकस्थितिरात्यन्तिकी क्वचिद् यदि भवेत् तदाऽसंभवन्भुक्तिनां केवलिनां प्रमाणतः प्रतिपत्तेः "असरीरा जीवघणा" [आव० नि० गा० ९७७] इत्याद्यागमविरोधः प्रसज्येत, असदेतत्; यतः किमेवं सर्वज्ञस्यासत्त्वं प्रतिपादयितुमभिप्रेतम्, उतातिशयदर्शनस्य तदहेतुत्वम्? न तावदाद्यः पक्षः धर्मिणोऽभावे तद्धर्मस्य प्रस्तुतस्य साधयितुमशक्तेः। नापि द्वितीयः औदारिक-शरीरस्य चिरतरकालावस्थायित्वस्याविरोधात्। न चातिशयदर्शनस्य तदहेतुत्वे केवलिभुक्ति-सिद्धिः। न च यदतिशयवत् तदात्यन्तिकमतिशयमनुभवतीनि सर्वत्र साध्यते किन्तु व्याप्तिदर्शन-मात्रमेतत्, अतः कियत्कालावस्थितिमात्रं केवलिनां शरीरस्थितेरिष्टं नात्यन्तिकम्। न च संयोगस्यात्यन्तिकी स्थितिः संभवति सत्यपि प्रकर्षदर्शने जीवकर्मणोरनादित्वेऽपि विश्लेषप्रतिपत्तेः

---

१. तु० – पृ० ४४॥

संश्लेषस्थितिनियमस्य चानिष्टेरसंख्येयकालादूर्ध्वं पुद्गलपरिणतेः सर्वस्या अन्यथाभवनाद्, औदारिकशरीरस्य च निराहारस्य चिरतरकालस्थायिन उत्तरकालमशेषकर्मक्षयाद् विनिवृत्तावस्ति साधनं सुनिश्चितासंभवद्बाधकप्रमाणत्वम् । इदमेव च तत्त्वव्यवस्थायां सर्वत्राभ्युपगन्तव्यम् । न ह्यध्यक्षाद्यवगतस्याप्यर्थस्यैतदन्तरेण तत्त्वव्यवस्थितिः, अनुभूतस्यापि बाधकप्रत्ययप्रवृत्तौ मिथ्यात्वरूपतया व्यवस्थापनात् । ततः सुनिश्चितासंभवद्बाधकप्रमाणत्वादेव प्रमाणप्रमेयतत्त्व-सिद्धिः, बाधकप्रमाणनिश्चयात् तद्विपरीतार्थप्रतिपत्तिः, उभयोरनिश्चये दृष्टश्रुतयोरर्थयोः संशीतिरिति व्यवस्था । सुनिश्चितासंभवद्बाधकप्रमाणत्वं च प्रकृताहारवैकल्येऽपि सर्वज्ञौदारिक-शरीरचिरस्थायित्वप्रतिपादकागमस्य समस्त्येवेति न किञ्चित् तस्य कवलाहारपरिकल्पनया । केवली च कवलाहारमश्नन् किं बुभुक्षया उत शरीरस्थित्यन्यथाऽनुपपत्त्यां आहोस्वित् स्वभावतो-ऽश्नातीति वक्तव्यम्? न तावदाद्यः पक्षः, बुभुक्षाया दुःखरूपत्वात्, तन्मूलदोषराशिनिवृत्तौ तस्या असंभवात्, अनिवृत्तौ वा तत्प्रभवस्य दुःखसमूहस्य सद्भावे आत्यन्तिकसौख्यानुपपत्ति-र्भगवति स्यात् । न च क्षुत्तुल्या शरीरवेदनेत्युक्तम् । बुभुक्षामन्तरेणापि शरीरं स्थापयितुमिच्छु-रश्नातीति चेत्, न; अनन्तवीर्यस्य भगवतः शरीरस्थितिमिच्छोः प्रकृताहारमन्तरेणापि तत्स्थापनासामर्थ्याविरोधात् । शरीरतिष्ठापयिषाऽपि बुभुक्षावत् क्लेश एवेति न प्रथमपक्षादस्य विशेष इति न द्वितीयः पक्षोऽपि । नापि तृतीयपक्षाभ्युपगमोऽपि युक्तः प्रकृताहारविकलस्यैव विवक्षितकालभाविशरीरस्थितिस्वभावकल्पनयैव दोषाभावाद्, अन्यथाऽशिष्टव्यवहारेष्वपि तत्स्वभाव कल्पनायाः प्रसङ्गात् । तीर्थप्रवर्तनस्य तु व्यापारव्याहारलक्षणस्य तत्कालभाविविवक्षाचिकीर्षा-भावेऽपि सद्भावो न विरुध्यते, तीर्थप्रवर्तनस्य सद्भावनाविशेषोत्पन्नविशिष्टफलरूपत्वात् । सकलक्लेशोपरमेऽपि च तीर्थप्रवर्तनं स्वयमभ्युपगतं परेण, प्रकृताहारादिकं तु क्लेशोपशमनार्थं कथं तत्स्वभावतः कल्पयितुं युक्तम्? न च भगवति क्लेशः नापि तदुपशमनवाञ्छा तस्येति कवलाहारपरिकल्पनायां भगवति पक्षत्रयेऽपि दोषानतिवृत्तेः प्रकारान्तरस्य चासंभवान्न तत्र प्रकृताहारकल्पना युक्तिसंगता ।

अत्र प्रतिविधीयते – यदुक्तम् 'छद्मस्थे उपयोगक्रमस्य दृष्टत्वात् केवलिनि च छद्माभावा-दुपयोगक्रमाभावः' तत्र क्रमोपयोगस्य क्षयोपशमकार्यत्वात् केवलिनि च तदभावात् क्रमोपयो-गस्यापि तत्कार्यस्याभावः । तथाहि – यन् यत्कारणं तत् तदभावे न भवति यथा चक्षुरभावे चक्षुर्ज्ञानम्, क्षयोपशमकारणश्च क्रमोपयोग इति क्षायिकोपयोगवति केवलिनि क्रमोपयोगाभावः । अथ क्षयोपशमाभावे भवतु तत्र मतिज्ञानादिक्रमवदुपयोगाभावः केवलज्ञानदर्शनयोस्तु क्षायिकत्वात् कथं क्षयोपशमाभावे तयोः क्रमाभावः? उच्यते, यद् यदाऽविकलकारणं तत् तदाऽवश्यंतया प्रादुर्भवति यथा अन्त्यावस्थाप्राप्तक्षित्यादिसामग्रीसमयेऽङ्कुरः, अविकलकारणं च केवलज्ञानोपयोग-काले केवलदर्शनम् स्वावरणक्षयलक्षणाविकलकारणसद्भावेऽपि तदा तस्यानुत्पत्तावतद्धेतुकताप्रसक्ते-

देशकालाकारनियमो न भवेत् । अनायत्तस्य तदसंभवात् इति प्रतिपादितत्वात् । क्रमोत्पत्तिस्वभावप्रकल्पनायां क्षायिकत्वं तस्य परित्यक्तं स्यात् । अध्यक्षसिद्धे च क्रमे तत्स्वभावप्रकल्पना युक्तिसंगता अन्यथातिप्रसङ्गः सर्वभावव्यवस्थाविलोपप्रसक्तेः । न च यो यज्जातीये दृष्टः सोऽन्यत्रातज्जातीये न भवति इत्येतदत्र विवक्षितं, किं तर्हि ? कारणाभावे कार्यं न भवति, अविकलकारणं चाविलम्बितोत्पत्तिकमेतदत्र प्रतिपादयितुमभिप्रेतमाचार्यस्य ।

तेन यदि केवलिनो भुक्तिकारणाभावः सिद्धो भवेत् प्रतिबद्धत्वं वा स्वकार्यकरणे कारणस्यावगतं भवेत् तदा तदभावनिश्चयः स्यात्, न चैतदुभयमपि भवस्थकेवलिनि सिद्धम्, अप्रतिबद्धसामर्थ्यस्य क्षुद्वेदनीयकर्मोदयस्य तत्र सद्भावात् । तेनातज्जातीयत्वेऽपि केवलिनि भुक्तिकल्पनायां चतुर्ज्ञानित्वाऽकेवलित्वापत्त्यादेर्दूषणस्यानवकाशो भुक्तिकारणस्येव तत्कारणस्य तत्राभावान्निर्निमित्तस्य च चतुर्ज्ञानित्वादेः कार्यस्यासंभवात् । यच्च अतज्जातीयत्वं केवलिनः प्रतिपादितं तत् किमस्मदाद्यपेक्षया आहोस्विदात्मीयच्छद्मस्थावस्थापेक्षया ? तत्राद्ये विकल्पे सिद्धसाध्यता । द्वतीयपक्षेऽपि किं घातिकर्मक्षयापेक्षया तत् तस्याभ्युपगम्यते आहोस्विद् भुक्तिनिमित्तकर्मक्षयापेक्षया ? प्रथमपक्षे सिद्धं विजातीयत्वं, न तु तावता तस्य भुक्तिप्रतिषेधः, अप्रतिबद्धसामर्थ्यस्य भुक्तिकारणस्य तथाविधजातीयत्वेऽपि स्वकार्यनिर्वर्तकत्वात् । द्वितीयपक्षोऽप्ययुक्तः, अतज्जातीयत्वस्यैवासिद्धत्वात्, तन्निमित्तस्य कर्मणो भवस्थकेवलिनि पर्यन्तसमयं यावदनुवृत्तेः । यदपि 'न देहित्वं भुक्तिकारणं तथाभूतशक्त्यायुष्ककर्मणोस्तद्धेतुकत्वादेकवैकल्ये तदभावात्' इति तदप्यसंगतम् यतो न देहित्वमात्रं प्रकृतभुक्तिकारणमपि तु विशिष्टकर्मोदयादिसामग्री, तस्याश्च ततोऽव्याप्यव्यावृत्तेः कुतस्तदभावः ? तथाभूतशक्त्यायुष्ककर्मणोश्चैकस्यापि वैकल्यासिद्धेरेकवैकल्ये तदभावादित्यसिद्धम् । यच्च 'औदारिकव्यपदेशोऽप्युदारत्वान्न भुक्तेः' इति, तदपि न दोषावहम्, औदारिकशरीरित्वे स्वकारणाधीनाया भुक्तेरप्रतिषेधात् । व्यपदेशस्योदारत्वनिमित्तत्वेऽपि स्वकारणनिमित्तप्रकृतभुक्तिसिद्धेः । यदपि 'एकेन्द्रियादीनामयोगिपर्यन्तानामाहारिणां सूत्र उपदेशः' इत्याद्यभिधानम्, तदप्यसंगतम्; एकेन्द्रियादिसहचरितत्वनिरन्तराहारोपदेशत्वाद्यन्तरेणापि "विग्गहगइमावण्णा" [जीवसमासे. गा० ८२] इत्यादिसूत्रसंदर्भस्य केवलिभुक्तिप्रतिपादकस्यागमे सद्भावात् । न च तस्याप्रामाण्यम् सर्वज्ञप्रणीतत्वेनाभ्युपगतसूत्रस्येव प्रामाण्योपपत्तेः । न च तत्प्रणीतागमैकवाक्यतया प्रतीयमानस्याप्यस्यातत्प्रणीतत्वम्, अन्यत्रापि तत्प्रसक्तेः । यदपि 'शरीरप्रायोग्यपुद्गलग्रहणमाहारत्वेनाभिमतमत्र' इत्यभिधानम् तदप्यसंगतम्; विग्रहगत्यापन्नसमवहतकेवल्ययोगिसिद्धव्यतिरिक्ताशेषप्राणिगणस्य शरीरप्रायोग्यपुद्गलग्रहणमेवाहारशब्दवाच्यमिह सूत्रेऽभिप्रेतमिति कोऽन्यः सामयिकशब्दार्थविदो भवतोऽभिधातुं समर्थः ? यदपि 'निरन्तराहारत्वं केवलिनस्तेनाहारेण समुद्घातक्षणत्रयमपहाय भवेत्' इत्युक्तम् तदप्यसंगतम्, विशिष्टाहारस्य विशिष्टकारणप्रभवत्वात् तस्य च प्रतिक्षणमसंभवात्, यस्तु पुद्गलादान-

लक्षणो लोमाद्याहारस्तस्य प्रतिक्षणं सद्भावेऽप्यदोषात् । यदपि 'यथासंभवमाहारव्यवस्थितेः केवलिनः कवलाहारः अन्यथा शरीरस्थितेरभावात् व्यवस्थाप्यते' इत्यभिधानम् तद्युक्तमेव, न हि देशोनपूर्वकोटिं यावद् विशिष्टाहारमन्तरेण विशिष्टौदारिकशरीरस्थितिः संभविनी । न च तच्छद्मस्थावस्थानः केवल्यवस्थायामात्यन्तिकं तच्छरीरस्य विजातीयत्वं येन प्रकृताहार-विरहेऽपि तच्छरीरस्थितेरविरोधो भवेत् ज्ञानाद्यतिशयेऽपि प्राक्तनसंहननाद्यधिष्ठितस्य तस्यैवा-पातमनुवृत्तेः । अस्मदाद्यौदारिकशरीरविशिष्टस्थितेर्विशिष्टाहारनिमित्तत्वं प्रत्यक्षानुपलम्भप्रभव-प्रमाणेन सर्वत्राधिगतमिति विशिष्टाहारमन्तरेण तत्स्थितेरन्यत्र सद्भावे सकृदपि तत्स्थिति-स्तन्निमित्ता न भवेत्, अहेतोः सकृदपि सद्भावाभावात् । यदि पुनर्विशिष्टाहारनिमित्ताप्यस्मदादिषु विशिष्टशरीरस्थितिः पुरुषान्तरे तद्व्यतिरेकेणापि भवेत् तर्हि महानसादौ धूमध्वजप्रभवोऽपि धूमः पर्वतादौ तमन्तरेणापि भवेदिति धूमादेरग्न्याद्यनुमानमसङ्गतं भवेद् व्यभिचारात् । अथैतज्जातीयो धूमः एतज्जातीयाग्निप्रभवः सर्वत्र सकृत्प्रवृत्तेनैव प्रमाणेन व्यवस्थाप्यते तत्कार्यताप्रतिपत्तिबलात्, अग्निस्वभावादन्यत्र तस्य भावे सकृदप्यग्नेर्न भावः स्याद्, अग्निस्वभावाजन्यत्वात् तस्य, भवति चाग्निस्वभावान्महानसादौ धूम इति सर्वत्र सर्वदा तत्स्वभावादेव तस्योत्पादे तदुत्पत्तिकस्याधूमस्वभावत्वादिति न धूमादेरग्न्याद्यनुमाने व्याभिचारः, तर्ह्ययं प्रकारः प्रकृतेऽपि समानः, विशिष्टौदारिकशरीरस्थितेर्विशिष्टाहारमन्तरेणापि भावे तच्छरीरस्थितिरेवासौ न भवेत् । न चात्यन्तविजातीयत्वं तस्या इति प्रतिपादितम् । सर्वथा समानजातीयत्वं तु महानसपर्वतोपलब्धधूमयोरप्यसंभवि । ततोऽस्मदादेरिव केवलिनोऽपि प्रकृताहारमन्तरेणौदारिक-शरीरस्थितिश्चिरतरकाला न संभवतीत्यनुमानं प्रवर्तत एव अन्यथा धूमादेरग्न्यानुमानमपि न स्यात् । यदपि 'कुतस्तस्यैवं सर्वज्ञतादिसिद्धिः' इत्यभिधानम् तदप्यसंगतम् घातिकर्मक्षयप्रभव-सर्वज्ञतादेः प्रकृताहारेण तत्कार्येण वा चिरकालभाव्यौदारिकशरीरस्थित्यादिना विरोधासंभवात् सर्वज्ञतासिद्धिनिबन्धनस्य च प्रमाणस्य प्रतिपादितत्वात् प्रकृताहारप्रतिपादकस्य च । यदपि 'निराहारौदारिकशरीरस्थितेः प्रथमतीर्थकरप्रभृतीनामतिशयश्रवणात् तदियत्तानियमप्रतिपादक-प्रमाणाभावाच्च' इति तदप्यपर्यालोचिताभिधानम् तस्य प्रामाण्ये तदियत्तानियमस्यापि तत एव सिद्धेः तदधिकनिराहारतच्छरीरस्थितेः सूत्रे निषेधान्निरशनकालस्य तावत एवोत्कृष्टताप्रतिपाद-नात् । यदपि 'सूत्रभेदकरणकारणासंभवात्' इत्यादि तदप्यसङ्गतम्, चिरतरकालस्थितिरेव तच्छरीरस्य सूत्रभेदकरणकारणं प्रकृताहारमन्तरेण तत्स्थितेरसंभवस्य प्रतिपादनात् । भूयांसि च प्रकृताहारप्रतिपादकानि केवलिनः सूत्राण्यागम उपलभ्यन्ते प्रतिनियतकालप्रकृताहारनिषेधकानि च । यथा प्रथमतीर्थकृत एव चतुर्दशभक्तनिषेधेनाष्टापदनगे दशसहस्रकेवलिसहितस्य निर्वाण-गतिप्रतिपादकानि सूत्राणि । यदपि 'अतिशयदर्शनान्निरवशेषदोषावरणहानेः' इत्याद्याशङ्क्य विकल्पद्वयमुत्थाप्य परिहृतम् तत्रापि नास्माभिः सर्वज्ञत्वादेरभावः साध्यते येन धर्मिणोऽ-

भावात् प्रकृतसाध्यसिद्धिर्न भवेत्, किन्तु यद्यतिशयदर्शनान्नैर्मल्यप्रतिपत्तिवद् आत्यन्तिकी शरीरस्थितिस्तस्य साध्येत तदा मुक्तेरभावः प्रसज्यते एवेति प्रसङ्गसाधनं भवदभिप्रेतव्याप्तिवलात् क्रियत इति न प्रागुक्तदोषावकाशः। द्वितीयपक्षेऽपि 'न केवलिभुक्तिः सिध्यति नाप्यनाहारौदारिकशरीरस्य चिरतरकालस्थायित्वं विरुध्यते' इति यद्दूषणमुक्तम् तदनुक्तोपालम्भरूपम्, न ह्येवं केवलिभुक्त्यादिकमस्माभिः साध्यते, किन्तु प्रदर्शितप्रमाणात् सर्वज्ञप्रणीतागमाच्च। 'न च यदतिशयवत्' इत्याद्यप्यसंगतम् संवत्सरमात्रशरीरस्थितिसिद्धावपि केवलिनामतोऽतिशयात् प्रभूततरकालस्थित्यसिद्धेः। न च तावत्कालप्रकृताहारविरहप्रतिपादकमपि केवलिनां सूत्रमुपलभ्यते। यच्च 'संयोगस्यावस्थानमात्यन्तिकं न भवति' इत्यादि तत् सिद्धमेव साधितम्। यच्च 'सुनिश्चितासंभवद्वाधकप्रमाणत्वं प्रकृताहारविरहेऽपि चिरतरमौदारिकशरीरस्थितेः प्रतिपादकस्य सूत्रस्यास्त्येव' इत्युक्तम् तदपि प्रकृताहारविरहे केवलिप्रकृतशरीरस्थितेः प्रतिपादकस्य सूत्रस्यैवाभावादयुक्तम्। यदपि 'आहारविरहातिशयप्रतिपादकं सूत्रं प्रथमतीर्थकृदादेः' तदपि तच्छद्मस्थावस्थायां न पुनः केवल्यवस्थायाम्, असंभवद्वाधकप्रमाणत्वं चासिद्धमनुमानस्य तदाहारप्रतिपादकस्य वाधकस्य प्रदर्शितत्वात् सूत्रसमूहस्य च व्याख्याप्रज्ञप्त्याद्यङ्गेपु तद्बाधकस्योपलम्भात्।

किञ्च, सुनिश्चितासंभवद्वाधकप्रमाणत्वं न प्रमाणलक्षणं तस्य ज्ञातुमशक्यत्वात्। तथाहि—वाधकप्रमाणाभावो यद्यन्यतः प्रमाणादवसीयते तर्हि तत्रापि वाधकप्रमाणाभावनिश्चयात् प्रामाण्यनिश्चयस्तदभावनिश्चयश्चान्यतोऽवाधितप्रमाणादित्यनवस्थाप्रसक्तिः। अथ वाधानुपलम्भाद् वाधकाभावनिश्चयः, न; उत्पत्स्यमानवाधकेऽपि वाधकोत्पत्तेः प्राग् वाधानुपलब्धिसंभवान्न वाधकानुपलम्भाद् वाधाभावनिश्चयः। न चानिश्चितलक्षणं प्रमाणं प्रमेयव्यवस्थानिवन्धनम् अतिप्रसङ्गात्। अथ संवादादसंभवद्वाधकप्रमाणत्वनिश्चयस्तर्हि संवादित्वमेव प्रमाणलक्षणमभ्युपगमार्हं किमवाधितत्वलक्षणप्रतिज्ञानेन तच्च संवादित्वमतीन्द्रियार्थविषयस्यागमस्याप्तप्रणीतत्वान्निश्चीयते तत्प्रणीतत्वनिश्चयश्चागमैकवाक्यतया व्यवस्थितस्य केवलिभुक्तिप्रतिपादकसूत्रसमूहस्य सिद्ध एवेति भवत्यागमादपि केवलिभुक्तिसिद्धिः। तेन 'सूत्रभेदप्रक्लृप्तिः कवलाहारपरिकल्पनायां केवलिनः' इति दोषाभावः, यथोक्तन्यायात् तत्सिद्धेः। यदपि 'केवली प्रकृतमाहारमश्नन्' इत्यादिपक्षत्रयमुत्थाप्य तत्र दोषाभिधानम् तदप्यसंगतम्, यतः प्रथमपक्षे वुभुक्षयाऽश्नतो दुःखिताप्रसक्तिर्दोषः उद्भावितः, स चादोष एव असातानुभवस्य वेदनीयकर्मप्रभवस्यायोग्यवस्थाचरमक्षणं यावत् संभवात् तत्कारणस्यासातवेदनीयकर्मोदयस्याप्रतिवद्धत्वात् अविकलकारणस्य च कार्यस्योत्पत्त्यप्रतिषेधात् अन्यथा तस्य तत्कारणत्वायोगात्, न च दग्धरज्जुसंस्थानीयत्वात् तस्य स्वकार्याजनकत्वम् तत एव सातवेदनीयस्यापि स्वकार्याजनकत्वप्रसक्तेः सुखानुभवस्यापि भगवत्यभावप्रसङ्गात्। यथा च दग्धरज्जुसंस्थानीयायुष्ककर्मोदयकार्यं प्राणादिधारणं भगवति

तथा प्रकृतमप्यभ्युपगम्यतां विशेषाभावात् । न च बुभुक्षाया दुःखरूपत्वाद् भगवत्यसंभवः प्रतिपादयितुं शक्यः "एकादश जिने" [तत्त्वार्थ० अ० ९, सू० ११] इति सूत्रात् क्षुदादिपरिषहैकादशकस्य केवलिनि सिद्धेः । यदपि 'अनन्तवीर्यत्वं प्रकृताहारमन्तरेणापि शरीरस्थितिकारणमभिधीयते' तदपि छद्मस्थावस्थायां भगवत्यपरिमितबलश्रवणात् समस्त्येव, न च प्रकृताहारमन्तरेण तत् तस्यामवस्थायां शरीरस्थितिकारणम्, अन्यथा कर्मक्षयार्थमनशनादि तपस्युद्यमवतः प्राणवृत्तिप्रत्ययं तस्यामवस्थायामशनाद्यभ्यवहरणमसंगतं स्यात् । न च प्राक् क्षायोपशमिकं तस्य वीर्यं केवल्यवस्थायां तु क्षायिकं तदिति विशिष्टाहारमन्तरेणापि शरीरस्थितिनिबन्धनम्, तत्सद्भावेऽपि शरीरस्थितिनिमित्तशयनोपवेशादिवत् प्रकृताहारस्याप्यविरोधात् । न चोपवेशादिकमपि शरीरस्थित्यर्थं तत्रासिद्धम्, समुद्घातावस्थानन्तरकालं पीठफलकादिप्रत्यर्पणश्रुतेस्तद्ग्रहणमन्तरेण तत्प्रत्यर्पणस्यासंभवात्, तद्ग्रहणस्य च यथोक्तप्रयोजनमन्तरेणाभावात्, अन्यथाऽप्रेक्षापूर्वकारितापत्तेः । यदपि 'बुभुक्षया देहं तिष्ठापयिषोः क्लेशवत्त्वे न कश्चिद् विशेषः' तदप्यसारम्, क्लेशस्य भगवत्यद्याप्यामुक्तिगमनात् सर्वथा अनिवृत्तेः । तत्स्वभावपरिकल्पनया दोषप्रसञ्जनमभ्युपगमादेव निरस्तम् । तदेवं बाधकप्रमाणाभावात् साधकस्य च सद्भावात् सिद्धा केवलिभुक्तिरित्यलं प्रसक्तानुप्रसक्त्या ।" —पृ० ६१०–६१५

## वादिदेवसूरिविरचित्ते **प्रमाणनयतत्त्वालोकस्य** स्वोपज्ञवृत्तिरूपे [1]**स्याद्वादरत्नाकरे** केवलिभुक्तेश्चर्चा —

### [पूर्वपक्षः]

"केवली कवलाहारवान् न भवति छद्मस्थाद् विजातीयत्वात् ।......'ननु केवलिनः कवलाहारवत्त्वं यदि नाभ्युपेयते तदा कथं तस्य शरीरे औदारिकत्वव्यपदेशः स्यात्' इत्यपि नारेकणीयम् । न खलु तत्र कवलाहारनिबन्धनमौदारिकव्यपदेशं प्रतिजानते सन्तः । किं तर्हि? प्रधानपुद्गलारब्धत्वनिबन्धनम्, 'उदारैः सर्वपुद्गलराशिमध्यप्रधानैः पुद्गलैरारब्धमौदारिकम्' इति व्युत्पत्तेः । यदपि[2] "**सुहुमिगिंदियपभई जाव सजोगिकेवलित्ति सव्वे आहारगा जीवा**" इत्यनेन वचनेन एकेन्द्रियप्रभृतीनां सयोगिपर्यवसानानां प्राणिनामाहारवत्त्वेन सूत्रे प्रतिपादनात् कवलाहारित्वं केवलिनः सितवाससः प्रतिपेदिरे तदपि सूत्रार्थानवबोधविजृम्भितम् । तत्र हि सूत्रे भगवतः केवलिन एकेन्द्रियादिभिः सह निर्देशाद् निरन्तराहारोपदेशाच्च शरीरप्रायोग्यपुद्गलग्रहणमात्र-

---

१. स्याद्वादरत्नाकरे महता विस्तरेण पूर्वप्रक्षोत्तरपक्षावुपन्यस्य चर्चेयं विहिता वादिदेवसूरिभिः [पृ० ४५७–४८१] । अस्माभिस्त्वत्र कतिपय एवांशः समुद्धृतोऽस्ति ॥

२. तु०–पृ० ५१ ॥

माहारत्वेन विवक्षितम्, अन्यथा निरन्तराहारः कवलाहारेण भगवान् केवली भवेत् । न चैतदिष्टं भवद्भिरपि । अथैकेन्द्रियादिभिः सह निर्देशेऽपि निरन्तराहारोपदेशेऽपि च सूत्रे यथासम्भवमाहारवक्तव्यव्यवस्थितेः केवलिनः कवलाहारोऽपि कादाचित्को व्यवस्थाप्यते इतरथा अस्मदादेरिव दीर्घकालं देहस्थितेरभावप्रसंगादित्यभिधीयते तदपि न परीक्षाक्षमम् ।" —पृ० ४५७–४५८ ।

[उत्तरपक्षः]

"तत्रेदं पर्यनुयुज्यते —......ननु कुतः केवलिनः कवलाहारासम्भवः? मोहाभावादिति चेत्, मोहे क्षुत्कारणत्वस्य निराकरिष्यमाणत्वात् । यदप्यवाचि, अन्यथा निरन्तराहारः कवलाहारेण भगवान् केवली भवेदिति । तदपि न सुव्यवस्थितम् । [१]विशिष्टाहारस्य विशिष्टकारणप्रभवत्वाद्विशिष्टकारणस्य च प्रतिक्षणमसम्भवाद्भगवति कवलाहारस्य कादाचित्कत्वोपपत्तेः । यस्तु पुद्गलादानलक्षणो लोमाद्याहारस्तस्य प्रतिक्षणमपि तत्र सद्भावो न विरुध्यते । प्रतिक्षणभाविस्वकारणाधीनप्रवृत्तिकत्वात् । यच्चान्यदाशङ्कितं यथासम्भवमाहारव्यवस्थितेरित्यादि तदुपपन्नमेव । न हि देशोनपूर्वकोटीं यावद्विशिष्टाहारमन्तरेणौदारिकशरीरस्थितिः सम्भविनी । निरुपक्रमायुष्कत्वं छद्मस्थावस्थायामप्यस्त्येव ततस्तदापि भोजनं कुतः कुर्यात्, तदन्तरेणापि देहस्थितेः सम्भवात् । तत्किं निरुपक्रमायुष्कत्वं देहस्थितेः कारणं न भवतीत्यभिप्रायो भवताम्? नैवम् । किन्तु यथा स्वकारणसद्भावाच्छद्मस्थावस्थायामसौ निरुपक्रमायुष्कत्वेऽपि भुंक्ते तथा तत एव केवलिदशायामपि भुञ्जानः कथं निषिध्यत इत्यभिप्रायः । ननु छद्मस्थावस्थायां मोहनीयकर्मवशोपजातमधुरादिरसास्वादलौल्यातिरेकात्कवलनं कुरुतेऽसौ न केवल्यवस्थायां तदभावादिति चेत् । तदचारु । न खलु छद्मस्थावस्थायामपि मोहनीयस्य कार्यं कवलनम्, किन्तु वेदनीयादेः । ततः केवलिदशायां मोहनीयाभावात्कवलनलाम्पट्यं मास्तु, कवलनं तु स्वकारणोपनीतं तद्दशायामपि कथं पराणुद्यते । न च छद्मस्थावस्थातः केवल्यवस्थायामात्यन्तिकं तच्छरीरस्य विजातीयत्वम्, येन प्रकृताहारविरहेऽपि तच्छरीरस्थितिरविरुद्धा स्यात् । ज्ञानाद्यतिशयस्यापि प्राक्तनसंहननाद्यधिष्ठितस्य तस्यैव शरीरस्य पातं यावदनुवर्त्तनात् । अस्मदाद्यौदारिकशरीरविशिष्टस्थितेर्विशिष्टाहारनिमित्तत्वमुपलम्भानुपलम्भप्रभवतर्काख्यप्रमाणेन सर्वत्र प्रतिपन्नमिति विशिष्टाहारमन्तरेणापि विशिष्टौदारिकदेहस्थितेः क्वचिदन्यत्र सद्भावे सकृदपि सा विशिष्टाहारनिबन्धना न भवेत् । अहेतोः सकाशात्सकृदपि कार्यस्य सद्भावाभावात् । यदि पुनरस्मदादिषु विशिष्टाहारनिमित्तापि विशिष्टौदारिकशरीरस्थितिः क्वचित् पुरुषविशेषे विशिष्टाहारमन्तरेणाऽपि स्यात्तर्हि महानसादौ वह्निप्रभवोऽपि धूमः क्षितिधरकन्धरादौ वह्निं विनापि स्यादिति धूमादेर्वह्न्याद्यनुमानमनुपपन्नं भवेद् व्यभिचारात् । नन्वेतज्जातीयो धूम एतज्जातीयाग्निप्रभवः सर्वत्र सकृत्प्रवृत्तेनैव

१. तु०–पृ० ५२ ॥

प्रमाणेन तत्कार्यतापत्तिबलाद्व्यवस्थाप्यते, अग्निस्वभावादन्यतो हि तस्य भावे सकृदप्यग्नेर्भावो न भवेत्, अग्निस्वभावादन्यत्वात्तस्य । भवति चाग्निस्वभावाद्रसवतीप्रदेशादौ धूम इति सर्वत्र सर्वदाऽग्निस्वभावादेव धूमस्योत्पत्तिरतदुत्पत्तिकस्याधूमस्वभावत्वादिति न धूमादेरग्न्याद्यनुमाने व्यभिचार इति चेत् । तन्न । अस्य न्यायस्यान्यत्रापि समानत्वात् । विशिष्टौदारिकशरीरस्थितेर्हि विशिष्टाहारमन्तरेणापि भावे विशिष्टौदारिकशरीरस्थितिरेवासौ न भवेत् । न चात्यन्तविजातीयत्वं तस्याः केवलिनीत्यभिहितमेव । सर्वथा समानजातीयत्वं तु महानसमेदिनीधरकन्धरोपलब्धधूमयोरपि न सम्भवति । ततोऽस्मदादेरिव केवलिनोऽपि कावलिकाहारमन्तरेणौदारिकशरीरस्थितिश्चिरतरकाला न सम्भवतीति । अतो या विशिष्टौदारिकशरीरस्थितिः सा विशिष्टाहारमन्तरेण न भवति । यथाऽस्मदादेः । विशिष्टौदारिकशरीरस्थितिश्च विवादास्पदकेवलिन इत्यनुमानं प्रवर्त्तत एव । अन्यथा धूमादेरग्न्याद्यनुमानमपि न स्यात् ।" — पृ० ४६३–४६५ ।

"यद् दूषणमुदग्राहि — 'नन्वन्यजनातिशायी क्षुदभावातिशयोऽस्येष्यतां तस्यैव प्रमाणोपपन्नत्वात्' इति तत्र हेतोरसिद्धिः । तथाहि — प्रमाणमागमोऽन्यद्वा क्षुदभावे भवेत् । न[1] तावदागमः, सिद्धवत् सयोगकेवलिनि क्षुदभावप्रतिपादकस्यागमस्यासम्भवात् । अन्यस्माच्च प्रमाणात्क्षुदभावः स्वभावानुपलम्भादन्यतो वा स्यात् । न तावत्स्वभावानुपलम्भात् । केवलिनो विप्रकृष्टस्वभावे भावे स्वभावानुपलम्भोऽयुक्तः । एकज्ञानसंसर्गिपदार्थान्तरोपलम्भलक्षणत्वात्तस्य । अन्यतोऽपि विधीयमानान्निषिध्यमानाद्वा तन्निषेधः स्यात् । यदि विधीयमानात्, तदा तेन क्षुद्विरोधिना भवितव्यम् । अविरुद्धविधेरभावासाधकत्वात् । न च क्षुद्विरोधः केवलिनि किंचित्प्रतीयते । न च ज्ञानादिगुणा एव तत्र तद्विरोधिन इत्यभिधातुमुचितम् । यतो ज्ञानादिमात्रस्य क्षुधा विरोधस्तद्विशेषस्य वा । यदि ज्ञानादिमात्रस्य तर्हि [2]यथा यथा ज्ञानादयो गुणा विवर्धन्ते तथा तथा क्षुधो हानितारतम्येन भवितव्यम् । प्रकाशविवृद्धाविव तमसः । न चैवमस्ति । न हि बालादौ ज्ञानाद्यपचये क्षुदुपचयस्ततः प्रभृति च ज्ञानाद्युपचये तारतम्येन क्षुदपचयो लक्ष्यते । तन्न ज्ञानादिमात्रस्य क्षुधा विरोधः । [3]अथ ये केवलिगता ज्ञानादयः प्रकर्षपर्यन्तप्राप्तास्तेषामेव क्षुधा विरोधः तन्न, तथा प्रतिपत्तुमशक्तेः । नहि केवलिगता ज्ञानादयः क्षुधं विरुन्धन्तीत्यर्वाग्दृशा प्रतिपत्तुं शक्यम्, अतीन्द्रियत्वात्तेषाम् । किंचाविकलकारणस्य भवतोऽन्यभावेऽभावाद्विरोधगतिर्भवति शीतस्पर्शस्येवाग्निसन्निधौ । एतच्चात्र दुर्घटम् । केवलिगुणानामतीन्द्रियतयैतत्सन्निधौ क्षुन्न भवतीति प्रतीतेरनुपपत्तेः । तन्न विधीयमानात् कुतश्चित्तत्र क्षुधोऽभावसिद्धिः । निषिध्यमानश्च भावस्तस्याः कार्यं कारणं व्यापको वा स्यात् । यदि कार्यम्, तदा तन्निवर्त्तमानमात्मनिर्वर्त्तनसमर्थाया एव क्षुधो निवृत्तिमवगमयेन्न

---

१. तु० — पृ० ३९ पं० १७ ॥
२. तु० — पृ० ४० पं० १८ ॥
३. तु० — पृ० ४१ पं० ३ ॥

तु सर्वथा । कारणमात्रस्य कार्याभावेऽपि भावाविरोधात् । [१]कारणमपि निवर्त्तमानं कार्यं निवर्त्तयति, यथा वह्निर्धूमम् । व्यापकं वा निवर्त्तमानं व्याप्यम्, यथा वृक्षः शिंशपाम् । न चात्र क्षुधः कारणस्य व्यापकस्य वा कस्यचिन्निवृत्तिरस्ति । न च मोहनीयाभावात्क्षुधोऽभावः । तस्यास्तत्कार्यत्वस्य तत्स्वभावत्वस्य चासम्भवात् । न हि क्षुद् मोहनीयकार्या । वेदनीयप्रभवत्वात् । अन्यथा "वेदनीये शेषाः" [तत्त्वार्थ० ९-१६] इत्यागमविरोधापत्तेः । ननु नास्ति विरोधः । न हि वयं वेदनीयस्य क्षुत्कारणत्ववारणं विदध्महे किन्तु मोहनीयमपि तत्र सहकारितया व्यापिपर्त्तीति ब्रूमहे । न च सहकारिकारणविरहेऽपि कार्योत्पत्तिर्दृष्टचरी । न खलु वीजजलानिलातपसम्पर्के पृथिवीविरहेऽङ्कुरो जायत इति चेत् । नैवम् । मोहनीयस्य सहकारित्वासिद्धेः । न हि स्वाभिप्रायानुरोधेन किंचित् क्वचित्सहकारितया कल्पयितुमुचितम् । किन्तु यस्यान्वयव्यतिरेकौ कार्येणानुविधीयेते । न चात्र क्षुद् मोहनीयव्यतिरेकमनुविदधती क्वापि निश्चिता । ननु सिद्धेषु तन्निश्चयो भविष्यतीति । मैवम् । सन्देहात् । तथा हि सिद्धेषु किं वेदनीयाभावात् क्षुन्न भवति, आहोस्विन्मोहनीयाभावादिति । भवस्थकेवलिनि क्षुदभावो मोहनीयाभावप्रयुक्तो निश्चितो वेदनीयसद्भावादिति चेत् । न । तत्र क्षुदभावस्याऽद्यापि विवादास्पदत्वात् । नन्वेवं मोहनीयवदेव वेदनीयस्यापि क्षुत्कारणत्वं न स्यात् । मैवम् । क्षुत्कारणत्वेन तस्योभयसम्प्रतिपन्नत्वात् । [२]नापि मोहनीयस्वभावा क्षुत् । प्रतिपक्षभावनानिवर्त्यत्वप्रसङ्गात् । यो हि मोहस्वभावः स प्रतिपक्षभावनया निवर्त्यते । यथा क्षमादिभावनया क्रोधादिः । मोहस्वभावा च क्षुद् भवद्भिरिष्टेति । तथा च क्षुद्वेदनाप्रतीकारार्थं शास्त्रे प्रतिपक्षभावनैवोपदिश्येत । न क्लेशभूयिष्ठा ध्यानाध्ययनविघातकारिणी पिण्डैषणा । [३]शीतोष्णबाधातुल्यत्वाच्च क्षुधो न मोहस्वभावत्वम् । अन्यथा तद्बाधाया अपि मोहस्वभावत्वं स्यात् । ननु भगवतः क्षुदुपगमेऽशेषज्ञत्वादिविरोधः क्षुदुदयेऽस्मदादिवत्तत्र ज्ञानदर्शनचेष्टादेः प्रक्षयात् । तदसमीचीनम् । [४]ज्ञानावरणादिप्रक्षये जातायामपि क्षुधि तत्क्षयायोगात् । तत्क्षयो हि ज्ञानावरणादिकर्मोदयनिबन्धनोऽतोऽस्मदादौ तदुदयातिशयात्तत्क्षयातिशयो युक्तो भगवति तु तदावरणादेरशेषस्यापगमात्सत्यामपि क्षुधि न ज्ञानादिक्षयः । न ह्यग्न्यभावे सत्यपीन्धने धूमो भवति । तदेवं प्रमाणोपपन्नत्वादिति क्षुदभावसाधको हेतुरसिद्धः । तथा च कथं मुक्तिप्रतिषेधः । मुक्तिसाधकञ्चैतत्प्रमाणम् — विवादविषयापन्ने केवलिनि [५]कदाचित् कवलाहारभुक्तिरस्ति, अविकलकारणत्वात् । यद्यत्राविकलकारणं तत्तत्रास्ति, यथा क्वचित्प्रदेशेऽङ्कुरः । तथाभूता च कदाचित्क-

१. तु० – पृ० ४० पं० ११ ॥
२. तु० – पृ० ४३ ॥
३. तु० – पृ० ४३ ॥
४. तु० – पृ० ४४ ॥
५. तु० – पृ० ३९ ॥

वलाहारभुक्तिर्विवादविषयापन्ने केवलिनि । तस्मात्तत्र साऽस्तीति । न चाऽत्रासिद्धो हेतुः । यतः कवलाहारभुक्तेर्द्विधा कारणं बाह्यमाभ्यन्तरं च । तत्र बाह्यमनशनादि । तत्तावदस्त्येव । न तत्र कस्यापि विवादः । आभ्यन्तरं पर्याप्तिवेद्यतैजसदीर्घायुष्ट्वोदयलक्षणम् । तदपि विद्यत एव । यतो हि शरीरेन्द्रियादिनिष्पत्तिः सा पर्याप्तिर्नामकर्मविशेषः । वेद्यं सुखदुःखसम्पादकं वेदनीयाख्यं कर्म । तैजसं भुक्तान्नपाकादिकारणोष्मस्वरूपान्तस्तैजसशरीरकारणं नामकर्मैव । दीर्घमायुश्चिरजीवनकारणं कर्म । एतेषामुदयात्क्षुद्वेदनोपजायते । अस्ति चैतदुदयो भगवति स न भुक्तिकारणमिति । यदाह **शाकटायनः**—

**[1]अस्ति च केवलिभुक्तिः समग्रहेतुर्यथा पुरा भुक्तेः ।**
**पर्याप्तिवेद्यतैजसदीर्घायुष्कोदयो हेतुः ॥**" [केवलिभुक्ति १] इति ।"—पृ० ४७२–४७५ ।

"अपि च । उत्कर्षेण देशोनपूर्वकोटिं विहरतः सयोगिकेवलिनस्तावत्कालं शरीरस्थिति-र्भुक्ति" विना कथं घटेत । अथाऽनन्तवीर्यत्वात्तां विनाऽप्यस्य तत्स्थितिः तर्ह्यायुःकर्मणाऽपि विना तत्स्थितिप्रसङ्गान्न कदाचिच्छरीराद्यपायः स्यादिति मोक्षाय दत्तो जलाञ्जलिः । तत्स्थिते-रायुःकर्मापेक्षणे वाहारापेक्षणमप्यस्तु । उभयस्यापि तत्कारणत्वाविशेषात् । किं च, प्रदीप-ज्वालाजलधारासमानं शरीरम् । तत्र च यथा [2]तैलक्षये सति न प्रदीपज्वालाऽवतिष्ठते जलागमनमन्तरेण वा जलधारा । तथा शरीरमपि भुक्त्यभावे न स्थितिमास्कन्दति । [3]अथ भुक्तिर्दोषो यदुपवासादि प्रत्याख्यानं क्रियते, निर्दोषे च केवलिनि दोषो विरुद्धः । तर्हि निषद्या गमनं चार्हति न प्राप्नोति । स्थानयोगादिना निषद्यादेः प्रत्याख्यानात् । वचनं च न प्राप्नोति । मौनव्रतिकोपलम्भात् । [4]अथ मतमशेषज्ञस्य मांसादिकं पश्यतः कथं भुक्तिरन्तरायोपपत्तेरिति । एतदप्यनल्पतमोविलसितम् । यतोऽन्तरायकर्मोदयजन्यः परिणामविशेष एवाऽन्तरायशब्दे-नोच्यते । न च भगवत्यन्तरायकर्मसम्भवः । प्रक्षीणघातिकर्मत्वात्तस्य । भवतु वा कश्चित्स्व-कल्पनाशिल्पिनिर्मितोऽन्तरायः । तथाप्यवधिज्ञानिभिः परमर्षिभिरनेकान्तः । ते हि सकलं त्रैलोक्यं पश्यन्ति, अथ च भुञ्जते । अथ यदैवावधिज्ञानोपयोगमवधिज्ञानी करोति तदैवा-ऽसाववधिज्ञानी तद्विषयभूतमशेषं वस्तु पश्यति नाऽन्यदेति भोजनकाले यद्यसावुपयोगं करोति तस्यान्तरायो भवत्येव, न चायं प्रकारः केवलज्ञाने सम्भवति । तस्य सदोपयुक्तत्वादिति चेत् । एवं तर्हि दिव्यपरमाणुरूपं निरन्तराहारग्रहणमप्यस्य न प्राप्नोति । सततोपयोगित्वेन निरन्तर-मन्तरायसद्भावात् । अपि च महासामायिकपरिणामवतो भगवतः का नाम पिशितादिदर्शने

१. तु० – पृ० ३९ ॥
२. तु० — पृ० ४८ ॥
३. तु० — पृ० ४९ ॥
४. तु० — पृ० ५० ॥

सति भोजनकरणेऽपि करुणायाः खण्डनेति परिभाव्यतां मध्यस्थेनाऽन्तरात्मना । [१]अथ भुक्तौ जिह्वायां रसप्राप्तेः केवलिनो मतिज्ञानानुषङ्ग इत्युच्यते । तन्न वाच्यम् । यतो नेन्द्रियविषय-सम्बन्धमात्रेण मतिज्ञानं भवति । किं तर्हि सम्बन्धे मतिज्ञानावरणक्षयोपशमे च सति । एतच्च क्षीणाशेषावरणे केवलिनि नास्तीति न तज्ज्ञानानुषङ्गः । अन्यथा [२]श्रोत्रादीन्द्रियाणां दिव्यतूर्य्यादिरवेण गणधरदेवादिरूपेण सुगन्धिकुसुमधूपवासादिगन्धेन मरुत्सिंहासनस्पर्शेन सम्बधेऽपि मतिज्ञानमनुषज्यते ।"—पृ० ४८०–४८१ ।

दिगम्बराचार्य**प्रभाचन्द्र**विरचिते **न्यायकुमुदचन्द्रे** केवलिभुक्तेः पूर्वपक्षः—

"नन्विदमस्ति – [३]यदा भुक्तिः अविकलकारणा तदाऽसौ भवत्येव यथा छद्मावस्थायाम्, तथाभूता चासौ सयोगिकेवल्यवस्थायामिति ! द्विविधं हि भुक्तेः कारणम् – बाह्यम् आभ्यन्तरम् च । तत्र बाह्यम् – आहारादि, तत्तावदविकलमास्ते न तत्र विप्रतिपत्तिः । आभ्यन्तरमपि पर्याप्ति-वेद्य-तैजस-दीर्घायुष्कोदयलक्षणं भगवति अविकलमेव । यतो हि शरीरेन्द्रियादिनिष्पत्तिः सा पर्याप्तिः । वेद्यं सुखदुःखसाधकं कर्म । तैजसम् अन्तस्तेजः शरीरोष्मा, यतो भुक्ताऽन्नादि-पाको भवति इति । दीर्घमायुः चिरजीवनकारणं कर्म । एतदुदयात् क्षुद्वेदना उपजायते, अस्ति च तदुदयो भगवति, अतो भुक्तिसिद्धिः । तदनभ्युपगमे वा तत्र क्षुदभावः प्रमाणात् प्रतिपत्तव्यः । तच्च प्रमाणम् आगमः, अन्यद्वा स्तात्? न तावदागमः, सिद्धवत्त् सयोगकेवलिनि क्षुदभाव-प्रतिपादकस्य आगमस्याऽसंभवात् ।

प्रमाणान्तराच्च निषेधः स्वभावानुपलम्भात्, अन्यतो वा स्यात्? न तावत् स्वभावा-नुपलम्भात्, [४]केवलिनो विप्रकृष्टस्वभावत्वात् । न च विप्रकृष्टस्वभावे भावे स्वभावानुपलम्भो युक्तः, एकज्ञानसंसर्गिपदार्थान्तिरोपलम्भलक्षणत्वात्तस्य । अन्यतोऽपि विधीयमानात् निषिध्यमानाद्वा तन्निषेधः स्यात्? यदि विधीयमानात्, तदा तेन विरोधिना भवितव्यम्, अविरुद्धविधेरभावा-ऽसाधकत्वात् । न च क्षुद्विरोधि केवलिनि किञ्चित् प्रतीयते । [५]न च ज्ञानादिगुणा एव तत्र तद्विरोधिनः इत्यभिधातव्यम्, यतो ज्ञानादिमात्रस्य क्षुधा विरोधः, तद्विशेषस्य वा । यदि ज्ञानादिमात्रस्य, तर्हि यथा यथा तद्गुणा विवर्द्धन्ते तथा तथा क्षुधो हानितारतम्येन भवितव्यम् प्रकाशविवृद्धाविव तमसः, न चैवमस्ति । नहि बालादौ ज्ञानाद्यपचये क्षुदुपचयः, ततः प्रभृति च ज्ञानाद्युपचये तारतम्येन क्षुदपचयो लक्ष्यते । तन्न ज्ञानादिमात्रस्य क्षुधा विरोधः । अथ ये

१. तु० — पृ० ५१ ॥

२. तु० — पृ० ५१ पं० १० ॥

३. तु० – पृ० ३९ ॥

४. तु० – पृ० ३९–४० ॥

५. तु० – पृ० ४० ॥

केवलिगता ज्ञानादयः प्रकर्षपर्यन्तप्राप्ताः तेषामेव क्षुधा विरोधः, तन्न, तथा प्रतिपत्तुमशक्तेः । नहि केवलिज्ञानादयः क्षुधं विरुन्धन्ति इति अर्वाग्दृशा प्रतिपत्तुं शक्यम्, अतीन्द्रियत्वात्तेषाम् ।

किञ्च, [१]अविकलकारणस्य भवतोऽन्यभावेऽभावात् विरोधगतिर्भवति शीतस्पर्शस्येव अग्निसन्निधौ । एतच्चात्र दुर्घटम्—केवलिगुणानामतीन्द्रियतया 'एतत्सन्निधौ क्षुन्न भवति' इति प्रतीतेरनुपपत्तेः । तन्न विधीयमानात् कुतश्चित् तत्र क्षुधोऽभावसिद्धिः ।

निषिध्यमानश्च भावः तस्याः कार्यम्, कारणम्, व्यापको वा स्यात्? यदि कार्यम्, तदात्मनिर्वर्त्तनसमर्थाऽविकलकारणस्यैव तत् निवृत्तिमवगमयेत् न कारणमात्रस्य, अस्य कार्याभावेऽपि भावाविरोधात् । कारणमपि निवर्त्तमानं कार्यं निवर्त्तयति यथा वह्निर्धूमम्, व्यापकं वा निवर्त्तमानं व्याप्यम् यथा वृक्षः शिंशपाम् । न चात्र क्षुधः कारणस्य व्यापकस्य वा कस्यचिन्निवृत्तिरस्ति । न च मोहनीयादिकर्मचतुष्टयाभावात् क्षुधोऽभावः, तस्याः तत्कार्यत्त्वस्य तत्स्वभावत्वस्य वाऽसंभवात् । नहि क्षुत् तत्कर्मचतुष्टयकार्या प्राक्प्रतिपादितबाह्याभ्यन्तरकारणप्रभवत्वात्तस्याः । प्रतिपक्षभावनाऽनिवर्त्यत्वेन मोहस्वभावत्वासंभवाच्च, यो हि मोहस्वभावः स प्रतिपक्षभावनया निवर्त्यते यथा क्षमादिभावनया क्रोधादिः, मोहस्वभावा च क्षुद् भवद्भिरिष्टा इति । तथा च क्षुद्वेदनाप्रतीकारार्थं शास्त्रे प्रतिपक्षभावनैव उपदिश्येत न क्लेशभूयिष्ठध्यानाध्ययनविघातकारिणी पिण्डैषणा । शीतोष्णबाधातुल्यत्वाच्च क्षुधो न मोहस्वभावत्वम्, अन्यथा तद्बाधाया अपि मोहस्वभावत्वं स्यादविशेषात् ।

[२]ननु भगवतः क्षुदभ्युपगमे अशेषज्ञत्वादिविरोधः, क्षुदुदये अस्मदादिवत्तत्र ज्ञानदर्शनचेष्टादेः प्रक्षयात्, तदसमीचीनम्, ज्ञानावरणादिप्रक्षये जातायामपि क्षुधि ज्ञानादिक्षयायोगात्, तत्क्षयो हि ज्ञानावरणादिकर्मोदयनिबन्धनः । अतः अस्मदादौ तदुदयातिशयात् तत्क्षयातिशयो युक्तः, भगवति तु तदावरणादेरशेषस्यापगमात् सत्यामपि क्षुधि न ज्ञानादिक्षयः । नहि अग्न्यभावे सत्यपीन्धने धूमो भवति । तत्कर्मचतुष्टयप्रभवत्वे च क्षुधः "एकादश जिने क्षुत्पिपासादयः परीषहाः वेदनीयप्रभवाः" [ ] [३]इत्यागमविरोधः । न च उत्कर्षेण देशोनपूर्वकोटिं विहरतः सयोगकेवलिनः तावत्कालं कायस्थितिः भुक्तिं विना घटते । अथ अनन्तवीर्यत्वात् तां विनाप्यस्य तत्स्थितिः, तर्हि आयुष्यकर्मणापि विना तत्स्थितिप्रसङ्गात् न कदाचित् शरीराद्यपायः स्यात् इति मोक्षाय दत्तो जलाञ्जलिः । तत्स्थितेः आयुष्यकर्मापेक्षणे वा आहारापेक्षणमप्यस्तु उभयस्यापि तत्कारणत्वाऽविशेषात् ।

१. तु०—पृ० ४१ ॥
२. तु०—पृ० ४४ ॥
३. तु०—पृ० ४४ पं० १७ ॥

किञ्च, [१]प्रदीपज्वालाजलधारासमानं शरीरम्, तत्र च यथा तैलक्षये न प्रदीपज्वाला अवतिष्ठते जलागमनमन्तरेण वा जलधारा तथा शरीरमपि भुक्त्यभावे न स्थितिमास्तिघ्नुते ।

[२]अथ भुक्तिर्दोषः, यदुपवासादि प्रत्याख्यानं क्रियते, निर्दोषे च केवलिनि दोषो विरुद्धः, तर्हि निषद्या गमनञ्च अर्हति न प्राप्नोति स्थानयोगादिना निषद्यादेः प्रत्याख्यानात्, वचनञ्च न प्राप्नोति मौनव्रतिकोपलम्भात् ।

[३]अथ मतम्—अशेषज्ञस्य मांसादिकं प्रश्यतः कथं भुक्तिः अन्तरायोपपत्तेः ? तदसङ्गतम्, अवधिज्ञानिभिः परमर्षिभिरनेकान्तात्, ते हि सकलं त्रैलोक्यं पश्यन्ति अथ च भुञ्जते, एवं केवल्यपि । इन्द्रियविषये एव हि अन्तरायो नान्यत्र, अन्यथा छद्मस्थावस्थायामप्यन्तरायः स्यात्, भगवता तदापि अवधिज्ञानेन अशेषवस्तुसाक्षात्करणात् ।

[४]न च भुक्तौ जिह्वारसप्राप्तेः केवलिनो मतिज्ञानानुषङ्गः यतो न इन्द्रियविषयसम्बन्धमात्रेण मतिज्ञानं भवति । किं तर्हि ? तत्सम्बन्धे मतिज्ञानावरणक्षयोपशमे च सति । एतच्च प्रक्षीणाशेषावरणे केवलिनि नास्ति इति न तज्ज्ञानानुषङ्गः, अन्यथाश्रोत्रादीन्द्रियाणां दिव्यतूर्यादिरवेण गणधरदेवादिरूपेण सुगन्धिकुसुमधूपवासादिगन्धेन मरुत्सिंहासनस्पर्शेन सम्बन्धेऽपि मतिज्ञानमनुषज्येत ।

स च भगवान् पूर्वाह्णे अपराह्णे च पादोनप्रहरं धर्मोपदेशनाकाल एव सिंहासनाधिरुढ आस्ते, शेषदिनं तु दिव्यस्थाने देवछन्दकाभिधाने गणधरदेवान्विहाय अन्यमनुष्यतिरश्चामगोचरे ईशानदिशायां समवशरणीयद्वितीयप्राकाराभ्यन्तरवर्त्तिनि गत्वा पल्यङ्के आसने वा यथासुखमास्ते । तत्र च गणधरदेवैरानीतमाहारं सकलदोषशुद्धं ज्ञात्वा क्षुद्वेदनोदये गृह्णाति । ते च आहारं तदीयहस्ते निक्षिप्तिं पश्यन्ति, कथमसौ भुङ्क्ते इत्येतत्तु न पश्यन्ति, मनुष्यतिरश्चां सर्वज्ञाहारनी-(नि)हाराणामगोचरत्वात् इति ॥ छ ॥"—पृ० ८५२–८५५ ।

---

१. तु०—पृ० ४८ ॥
२. तु०—पृ० ४९ ॥
३. तु०—पृ० ५० ॥
४. तु०—पृ० ५१ ॥

# स्त्रीनिर्वाणप्रकरणस्य कारिकाणामकारादिक्रमः[1]।



१. पृ० १-७ इत्यत्र मूलमात्रे, पृ० १३-३८ इत्यत्र सटीके च स्त्रीनिर्वाणप्रकरणे ये मूलकारिकाङ्का निर्दिष्टास्ततो विभिन्नाः कारिकाङ्काः प्रथमपरिशिष्टे (पृ० ५३त आरभ्य) अस्माभिर्निर्दिष्टाः, तत्कारणं च पृ० १ टि० १, पृ ५३ टि० १ इत्यत्र दर्शितमस्माभिः। अत्र तु यः कारिकाङ्को दर्शितः स प्रथमपरिशिष्टानुसारेणैव ज्ञेयः। टीकायां तत्तत्कारिकाविवरणान्ते टीकानुसार्यङ्कोऽपि पृथग् दर्शितोऽस्ति॥

## केवलिभुक्तिप्रकरणस्य कारिकाणामकारादिक्रमः ।



## सटीकयो: स्त्रीनिर्वाण-केवलिभुक्तिप्रकरणयोरुद्धृता: पाठा: ।



---

१. "अजयं चरमाणो उ पाणभूयाइं हिंसइ।
बन्धइ पावयं कम्मं तं से होइ कडुअं फलं॥"
इति दशवैकालिके पाठ:॥

२. अयमन्तिमोऽङ्कः स्त्रीनिर्वाणकेवलिभुक्तिप्रकरणपृष्ठाङ्को ज्ञेय:॥

३. "देवी पणपण्णाऊ इत्थित्तं पल्लसयपुहुत्तं तु।
पुरिसत्तं सण्णित्तं सयपुहुत्तं च उयहीणं॥"
इति जीवसमासे सम्पूर्णा गाथा।

४. गोअंमि सत्त भंगा अट्ठयभंगा हवंति वेअणिए।
पण नव नव पण भंगा आउचउक्के वि कमसो उ।"
इति षष्ठकर्मग्रन्थे पाठ:॥

1. "कप्पइ निग्गंथाण वा निग्गंथीण वा चेलचिलिमिलियं धारित्तए वा परिहरित्तए वा।" इति बृहत्कल्पे पाठः उ० १ सू० १८॥
2. "सुरनारएसु चउरो जीवसमासा उ पंच तिरिएसु। मणुयगईए चोद्दस मिच्छद्दिट्ठि अपज्जत्ता ॥२२॥" इति जीवसमासे संपूर्णा गाथा॥



1. "संमुच्छिमभुजखयरा चउप्पयसप्पित्थिजलचरेहिंतो। सन्नरेहिंतो सत्तसु कमोववज्जंति निरएसु॥" इति उत्तराध्ययनवृहद्वृत्त्यनुसारेण सम्पूर्णा गाथा॥
2. "सन्नितिरिक्खेहिंतो सहस्सारंतिएसु देवेसु। उप्पज्जंति परेसु वि सव्वत्थ वि माणुसेहिंतो॥" इति शुद्धा गाथा॥
3. "सुरनारएसु चत्तारि पंच तिरिएसु चोद्दस मणुए। इगिविगलेसु जुयलं सव्वाणि पणिदिसु हवंति ॥२८॥" इति चन्द्रर्षिमहत्तररचिते श्वेताम्बरीये पञ्चसंग्रहे गाथा। तुलना-जीवस० गा० २२॥
4. सम्प्रति श्वेताम्बरपरम्परायां विद्यमाने श्री आचाराङ्गसूत्रे पाठ एवं विलोक्यते—"जे भिक्खू तरुणे जुगवं बलवं अप्पायंके थिरसंघयणे से एगं वत्थं धरेज्जा नो बितियं" —आचारांगसू० २१५ सू०।२। किन्तु अपराजितसूरिविरचितायां मूलाराधनाटीकायां तु पाठः आचाराङ्गसूत्रेन उद्धृता: तत्रैव पाठो विलोक्यते —"तथा वत्थेसणाए वुत्तं—तत्थ ए(जे?) से हिरिमणे सेगं वत्थं वा धारेज्ज पडिलेहणगं बिदियं। तत्थ ए(जे?) से जुग्गिदे से (?) से दुवे वत्थाणि धारिज्ज पडिलेहणगं तदियं। तत्थ ए (जे?) से परिस्सहं अणधिहासस्स तओ वत्थाणि धारेज्ज पडिलेहणगं चउत्थं।" —मूलाराधना ४।४२१ टीकायां ६११।

# विशिष्टाः शब्दाः[1] ।



१. अत्र प्रथमाङ्कः पृष्ठसूचकः, द्वितीयाङ्कः पङ्क्तिसूचकः॥

## शुद्धिपत्रकम् ।

[अस्मिन् ग्रन्थे येऽशुद्धा अपूर्णा वा पाठा मुद्रितास्ते तत्रैव द्रष्टव्याः। अत्र तु शुद्धा एव पाठा उपन्यस्ताः]

| पृ० | पं० | शुद्धम् |
|---|---|---|
| १ | ३ | शाकटायनाचार्य |
| ५ | १९ | व्यङ्गये |
| १० | ९ | उदयः |
| ११ | ५ | अपवर्तहेत्वभावे |
| ,, | ६ | र्थयते |
| १३ | ७ | भुक्ति-मुक्ति |
| १४ | २७ | प्ररूपयति – |
| १५ | ५ | [सनरेहिंतो] ससत्तु |
| १६ | ५ | उप्पज्जंति परेसु वि |
| ,, | १४ | वर्ति |
| १७ | १४ | निशीयभाष्ये |
| ,, | १८ | परिग्रहः, |
| १९ | ३० | यतीनां |
| २१ | २ | फले ॥ [दशवै० ४।८] |
| ,, | ४ | विधूयए ॥ [मूलाचारे गा० १०१४] |
| २५ | ७ | [17a] |
| ,, | ८ | द्वयक्षर |
|  | २४ | गणधरादीनाम् |
| २६ | १ | [19a] |
| ,, | १० | [19b] |
| ,, | २१ | [20a] |
| ,, | २४ | रामकेसव |
| २७ | ३ | [20b] |
|  | १४ | [21a] |
|  | २१ | [21b] |
| २८ | २ | [22a] |
| ,, | ११ | त्पधृतयः |
|  | १२ | [22b] |
|  | २२ | [23a] |
| ३२ | १४ | व्यरूपे |
| ३४ | १५ | पुंगन्धेन |
| ३५ | २७ | तद्विशेषस्य [illegible] |
| ३६ | २९ | स्त्रीत्व-पुंस्त्वा |
| ३७ | २७ | मिता |
| ४४ | २८ | सत्यामपि क्षुधि |
| ,, | ,, | न ज्ञानादिक्षयः |
| ४५ | १६ | ॥ १६ ॥] |
| ५० | १५ | साध्य (ध्य) स्तीति |
| ५१ | ६ | प्राप्त्या प्रतिक्षिप्तम् |
| ,, | २३ | गुहुर्मेगिदिय |
| ,, | २९ | समुद्धया |
| ५३ | ३ | मर्हतो |
| ,, | २१ | ष्यनिकायां |
|  | २२ | तत्संग्रहश्लोकाश्च |
| ५४ | १७ | नैव मुक्तः |
| ५५ | २३ | ऽक्षेप्यस्त्रीपुंसाः |
| ५९ | २५ | निवृत्तौ |
| ,, | २८ | चारदर्शनात् |
| ६० | १३ | सम्बन्धिनी |
| ,, | २३ | पुरुषे सकल |
| ,, | २५ | वशादभावः |
| ६१ | २ | दोषाभ्यनुज्ञा |
| ,, | ,, | नैर्ग्रन्थ्य |
|  | १६ | सिद्धम् |
| ६२ | ७ | असदेतत्, |
| ६३ | १४ | व्याम्, |
| ६४ | ४ | प्राक् |
| ,, | ,, | मूलाध्ययनगाथाश्च |
| ६६ | ६ | प्रव्राजनं |
| ६७ | ७ | गेषामयोगिनो |
| ,, | ११ | चतुष्पात् |
| ६८ | ४ | [illegible] |
| ,, | १७ | प्रकर्षवशेन |
| ६९ | ३ | यद् यथो |
| ,, | ४ | तद्योगस्य |
| ,, | ११ | सत् प्रकृ |
| ,, | १२ | तत् पर्याणि |
| ,, | २० | ८८] |
| ७० | ४ | पुंसि [illegible] |

| | | | | | |
|---|---|---|---|---|---|
| ७० | ८ | लक्षितं | ८३ | १२ | का० २७] |
| ७१ | २ | वस्यानाभिधानादेवमुच्यते | ,, | १४ | किञ्चिन्नि |
| ,, | | | ,, | २१ | तदुपादायिनां |
| ,, | १३ | द्वाक्याविपयत्वात्। | ८४ | ३ | मरदु |
| ,, | २० | [देवचन्द्र लालभाई पु. प्रकाशित] | ,, | १४ | अट्ठसय |
| ७२ | ८ | धूमाभावेन | ,, | २१ | सम्पराये |
| | १६ | गच्छन्ति | ८५ | ३ | द्ध्रियते |
| ७३ | २० | तुल्यत्वात्। | | ७ | त्पद्यते |
| ७४ | ३ | व्यवहृति | | १० | कयत्येवासौ |
| ,, | १२ | चतुर्दश गुण | | १८ | पर्याप्तत्वं१ |
| ७५ | २० | स्तिर्यक्स्त्रिय | | १९ | त्वं ४ चेति। |
| ,, | २६ | वृत्तौ | | २० | वृत्तौ |
| ७६ | ७ | कालादिपु | ८६ | १० | सद्भावात् |
| ,, | ,, | स्वाध्याया | | ११ | नेभ्योऽधिक |
| ७७ | १३ | यथावत् प्रति | ८७ | १५ | नाग्न्या |
| ,, | १७ | यावद् गच्छन्ति | ,, | २२ | वक्तुम् |
| ,, | २१ | निर्वाणं | ,, | २३ | प्रक्षेपा |
| ७८ | २३ | पक्षोऽपि | ८८ | ९ | त्व-संसा |
| ,, | २५ | होत्तए | ,, | २२ | वद्भुक्तीनां |
| ७९ | २० | मूर्च्छाहेतु | ८९ | ९ | मश्नन् |
| ८० | ४ | दिलव्वीनामपि | ,, | १६ | तत्स्वभाव– |
| ,, | ,, | स्तद् भवि | ,, | २४ | कार्यत्वात् |
| ,, | ९ | जीवाणं | ,, | २५ | –यद् |
| ,, | १४ | नामिव | ९० | १२ | द्वितीय |
| ,, | २२ | ता दोपः, | ९१ | ५ | वस्यातः |
| ,, | २६ | पुंसां | ,, | १७ | देरिव |
| ,, | २७ | चार इति | ,, | १८ | रग्न्याद्यनु |
| ,, | ,, | ता दोपः, | ,, | २० | विरोधासं |
| ८१ | ८ | पंवत्त्वेने | ९३ | २६ | पूर्वपक्षो |
| ,, | २० | निशीथभा० | ९५ | २३ | विरोधः, |
| ,, | २६ | ], | ९६ | २४ | भुक्तिप्रतिषेधः। भुक्ति- |
| ,, | २८ | ध [पृ० ७६–१२४] | ९७ | ११ | र्भुक्ति विना |
| ८२ | १५ | पर्यन्त | ९८ | ५ | सम्बन्धे- |
| ,, | २३ | शिगपात्वस्य | ,, | १२ | स्तेजःशरीरोष्मा |
| ८३ | १ | मिदं | ,, | १५ | सिद्धवत् |
| ,, | २ | ते हि | ९९ | १० | तत्कार्यत्वस्य |
| ,, | ५ | ॥ [स्त्रीनिर्वाण० ६] | १०० | १२ | अन्यथा श्रोत्रादी |
| ,, | ७ | चतुष्पान् | ,, | १७ | समवसरणीय |
| ,, | ८ | गानांसं | | | |